॥ ६० ॥

श्रीविजयधर्मसूरिभ्यो नमः ।

श्रीवादिदेवसूरिविरचितः

# प्रमाणनयतत्त्वालोकालङ्कारः



## श्रीरत्नप्रभाचार्यविरचित-रत्नाकरावतारिकाऽऽख्य-लघुटीकासहितः ।

सिद्धये वर्धमानः स्तात् ताम्रा यन्नखमण्डली ।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥ १ ॥

यैरत्र स्वप्रभया दिगम्बरस्यार्पिता परा-भूतिः ।
प्रत्यक्षं विबुधानां जयन्तु ते देवसूरयो नव्याः ॥ २ ॥

स्याद्वादमुद्रामपनिद्रभक्त्या क्षमाभृतां स्तौमि जिनेश्वराणाम् ।
सन्न्यायमार्गानुगतस्य यस्यां सा श्रीस्तदन्यस्य पुनः स[1] दण्डः ॥३॥

इह हि लक्ष्यमाणाऽक्षोदीयोऽर्थाक्षूणाक्षरक्षीरनिरन्तरे, तत इतो दृश्यमानस्याद्वादमहामुद्रामुद्रितानिद्रप्रमेयसहस्रोत्तुङ्गतङ्गत्तरङ्गभङ्गिसङ्गसौभाग्यभाजने, अतुलफलभरभ्राजिष्णुभूयिष्ठागमाऽभिरामातुच्छपरिच्छेदसन्दोहशाद्वलासन्नकाननिकुञ्जे, निरुपममनीषामहायानपात्रव्यापारपरायणपूरुषप्राप्यमाणाप्राप्तपूर्वरत्नविशेषे, क्वचन वचनरचनाऽनवद्यगद्यपरम्पराप्रवालजालजटिले, क्वचन सुकुमारकान्तालोकनीयास्तोकश्लोकमौक्तिकप्रकरकरम्बिते, क्वचिदनेकान्तवादोपकल्पितानल्पविकल्पकल्लोलोल्लासितोद्दामदूषणाद्रिविद्राव्यमाणानेकतीर्थिकनक्रचक्रचक्रवाले, क्वचिदपगताशेषदोषानुमानाभिधानोद्वर्तमानासमानपाठीनपु

---

1 स एवेति टिप्पणसंमत पाठः ।

च्छच्छटाऽऽच्छोटनोच्छलदतुच्छशीकरश्लेषसजायमानमातण्डमण्डलप्रचण्डच्छमत्कारे, क्वापि तीर्थिकग्रन्थग्रन्थिसार्थसमर्थकदर्थनोपस्थापितार्थानवस्थितप्रदीप्यमानप्लवमानज्वलन्मणिफणीन्द्रभीषणे, सहृदयसैद्धान्तिकतार्किकवैयाकरणकविचक्रचक्रवर्तिसुविहितसुगृहीतनामधेयास्मद्गुरुश्रीदेवसूरिभिर्विरचिते स्याद्वादरत्नाकरे न खलु कतिपयतर्कभाषातीर्थमजानन्तोऽपाठीना अधीवराश्च प्रवेष्टु प्रभविष्णव , इत्यतस्तेषामवतारदर्शनं कर्तुमनुरूपम्। तच्च संक्षेपत शास्त्रशरीरपरामर्शमन्तरेण नोपपद्यते। सोऽपि समासत सूत्राभिधेयावधारणं विना न, इति प्रमाणनयतत्त्वालोकाख्य-तत्सूत्रार्थमात्रप्रकाशनपरा रत्नाकरावतारिकानाम्नी लघीयसी टीका प्रकटीक्रियते ॥

तत्र चेह यत्र क्वचिदपि प्रवर्तमानस्य पुरुषत्वाभिमानिनोऽनेकप्रकारतत्तद्गुणदोषदर्शनाऽऽहितसंस्कारस्याऽह्नाय द्वये स्मृतिकोटिमुपढौकनीया भवन्त्युपकारिण , अपकारिणश्च–विशेषतो ये यत्र तदभिमततत्त्वावधारणेनाऽऽरिराधयिषिता., तदुपहितदोषापसारणेन पराचिकीर्षिताश्च। द्वयेऽपि चामी द्वेधा– परापरभेदात्, बाह्यान्तरङ्गभेदाच्च। इत्यस्मिन् प्रमाणनयतत्त्वपरीक्षाप्रवीणे प्रक्रमे कृतज्ञास्तत्रभवन्तस्तेषां प्रागेव स्मृतये श्लोकमेकमेनमचिकीर्तन्–

रागद्वेषविजेतारं ज्ञातारं विश्ववस्तुनः ।
शक्रपूज्यं गिरामीशं तीर्थेशं स्मृतिमानये ॥१॥

तीर्थस्य चतुर्वर्णस्य श्रीश्रमणसङ्घस्य, ईशं स्वामिनम्, आसन्नोपकारित्वेनात्र श्रीमहावीरम्, अहमिह प्रक्रमे स्मृतिमानये, इति संटङ्क । रागद्वेषयो. प्रतीतयो , विशेषेण अपुनर्जेयतारूपेण जयनशीलमिति ताच्छीलिकस्तृन्, तत "न कर्तृतृजकाभ्याम्" इति तृचा षष्ठीसमासप्रतिषेधात् कथमत्रायम् ?, इति नाऽऽरेकणीयम्। तथा विश्ववस्तुन कालत्रयवर्तिसामान्यविशेषात्मकपदार्थस्य, ज्ञातारम्, अमलकेवलालोकेन। शक्राणामिन्द्राणाम्, पूज्यमर्चनीयम्, जन्मस्नात्राष्टमहाप्रातिहार्यादिसंपादनेन ।

गिरां वाचाम्, ईशमीशितारम्, अवितथवस्तुव्रातविषयत्वेन तासां प्रयोक्तृत्वात्। अनेन च विशेषणचतुष्टयेनाऽमी यथाक्रमं भगवतो मूलातिशयाश्चत्वारः प्ररूपिता। तद्यथा-अपायापगमातिशय, ज्ञानातिशय., पूजातिशय, वागतिशयश्चेति। एतेनैव च समस्तेन सर्वस्वादे. स्वगुरुपर्यन्तस्य स्मृति कृतैव द्रष्टव्या, तस्याप्येकदेशेन तीर्थेशत्वात्, निगदितातिशयचतुष्टयाधारत्वाच्च। इति परापरप्रकारेण द्विविधस्याप्युपकारिण सूत्रकारा. सस्मरु ॥

अपकारिणस्तु तथाभूतस्येत्थमनेनैव श्लोकेन स्मृतिमकुर्वन्-तीर्थस्य प्रागुक्तस्य, तदाधयस्याऽऽगमस्य वा, ई लक्ष्मीं, महिमानं वा, श्यति तत्तदसद्भूतदूषणोद्घोषणै स्वाभिप्रायेण तनूकरोति य स तीर्थेश, तीर्थान्तरीयो बहिरङ्गापकारी, तम्। किंरूपम्?, शक्र पूज्यो यागाद्यैर्हविर्दानादिना यस्य स तथा, तम्, एतावता वेदानुसारिणो भट्टप्रभाकरकणभक्षाक्षपादकपिला. सूचयाञ्चक्रिरे। पुन किंभूतं तीर्थेशम्?, गिरामीशं वाचस्पतिम्, इति नास्तिकमतप्रवर्तयितुर्बृहस्पते. सूचा। तथा गिरा वाचाम्, ई लक्ष्मीं शोभां, श्यति य., तम्, परमार्थतः पदार्थप्रतिपादनं हि वाचां शोभा, तां च तासामपोहमात्रगोचरतामाचक्षाणस्तथागतस्तनूकरोत्येव, इति विशेषणावृत्त्या सुगतोपक्षेप.। पुनः कीदृशं तम्?, ज्ञातार विश्ववस्तु न -नोऽस्माक श्वेतभिक्षूणां संबन्धि, विश्ववस्तु समस्तजीवादितत्त्व कर्मताऽऽपन्नम्, समानतन्त्रत्वात् ज्ञातारम्, इति दिगम्बरावमर्श। ज्ञातारमिति च तृन्नन्तम्, इति "तृन्नुदन्त-" इत्यादिना कर्मणि षष्ठीप्रतिषेध। नन्वेकस्मिन्नेव वक्तरि स्वात्मानं निर्दिशति कथ 'आनये' इत्येकवचनम्, 'न.' इति बहुवचनं च समगंसाताम्?, इति चेत्। नैतद् वचनीय वचनीयम्, 'न' इत्यत्रापि वक्त्रा स्वस्यैकत्वेनैव निर्देशात्, बहुवचनं त्वेकशेषवशात्। तथाहि-ते चान्ये सर्वे श्वेतवासस, अहं च प्रचिकसितशास्त्रसूत्रधारः, वयम्, तेषां न, "त्यदादि" इत्यनेनास्मच्छब्दोऽवशिष्यते, बहुवचनं च भवति। ततोऽस्माक श्वेतवासोदर्शनाश्रितानां सर्वेषां तत्त्व यो जानाति, तं च स्मरा-

मीत्युक्तं भवति । इत्थं चैकशेषशालिविशेषणं कुर्वाणैस्तच्छब्दोपदिष्टमार्गस्याशेषश्वेताम्बरपारतन्त्र्यं स्वस्याविश्चक्रे । पुनः कीदृक्षं तम् ?, रागद्वेषविजेताऽऽरम्,–इत प्राप्तसंबन्धम्, आरं सांसारिकानेकक्लेशस्वरूपिशत्रुसमूहो यस्मिंस्तीर्थेशे स तथा, तं च, कथमेतादृशं तम् ?, इत्याह– रागद्वेषविजा– रागद्वेषाभ्यां कृत्वा याऽसौ विक् श्रीमदर्हत्प्रतिपादिततत्त्वात् पृथग्भावः, तया । भगवदर्हत्प्रतिपादित तत्त्वमनुभवन्तोऽपि हि रागद्वेषकालुष्यकलङ्काक्रान्तस्वान्ततया परेऽपरथैव प्रलपन्त सांसारिकक्लेशशात्रवगोचरता गच्छन्त्येव । अनेन चाशेषाणां शेषाणामपि संभवैतिह्यप्रमाणवादिचरकप्रमुखाणामाविष्करणम् । न खलु मोहमहाशैलूषस्यैको नर्तनप्रकारो यदशेषतीर्थिकानां प्रत्येकं स्मृतिः कर्तुं शक्येत । नन्वेवमेतान् प्रतिक्षेपार्थमुपाक्षिपतोऽस्य रागद्वेषकालुष्यवृद्धिः स्यात्, इति श्रेयोविशेषार्थमुपस्थितस्याऽश्रेयसि प्रवृत्तिरापन्ना, इति शङ्का निरसितुं 'रागद्वेष-' इति विशेषणं श्लिष्टमजीघटन्–अरमत्यर्थम्, रागद्वेषयोर्विजयनशील, तेषां स्मृतिमस्मि करोमि, न त्वन्यथा, इति तत्रभवदभिप्राय, प्रमाणनयतत्त्व खल्वत्र शुचिविचारचातुरीपूर्वमालोकनीयम् । न च रागद्वेषकषायितान्त करणैर्विरच्यमानो विचारश्चारुतामञ्चति। इत्यन्तरज्ञापकारिस्मरणम् ॥ ननु तथापि कथमेतैर्दिव्यदृग्भिरर्वाग्दृशोऽस्य तत्त्वविचारः साधीयान् ?, इत्यारेकामपाकर्तुं श्लेषेणैव व्यशीशिषन्–ज्ञाताऽरं विश्ववस्तुनः । विमलकेवलालोकाऽऽलोकितलोकालोकश्रीमदर्हत्प्रतिपादितागमवशात् खल्वहमपि काम विश्ववस्तूनां ज्ञातैवेति । बृहद्वृत्तौ तु स्वकर्तृकत्वाद् नामीषामपकारिणां निराचिकीर्षितत्वेन स्मरणं व्याख्यायि, न खलु महतामीदृशमर्थमित्थं प्रकटयतामौचिती नातिवर्तते; फलानुमेयप्रारम्भत्वात् तेषाम् । सूचामात्र तु सूत्रे कतिपयात्यन्तसहृदयहृदयसवेद्यमविरुद्धमिति ॥

ननु यदिह ज्वरप्रसरापसारिशेषशिरोरत्नोपदेशवद् अशक्यानु-

---

१ प्राप्तं संबद्धमित्यपि पाठ ।

ष्ठानाभिधेयम्, जननीपाणिपीडनोपदेशवद् अनभिमतप्रयोजनम्, दश-दाडिमादिवाक्यवत् सबन्धवन्ध्यं च, न तत्र प्रेक्षाचक्षुषः क्षोदिष्ठामपि प्रवृत्तिं प्रारभन्ते, तद्यदीदमपि तथा, न तर्हि तेषां प्रवृत्तौ निमित्तं स्यात्, इत्यारेकामधरीकर्तुमचीकृतन्-

**प्रमाणनयतत्त्वव्यवस्थापनार्थमिदमुपक्रम्यते ॥ १ ॥**

प्रकर्षेण संशयाद्यभावस्वभावेन, मीयते परिच्छिद्यते वस्तु येन तत् प्रमाणम्; नीयते गम्यते, श्रुतप्रमाणपरिच्छिन्नार्थैकदेशोऽनेनेति नयः, ततो द्वयोरपि द्वन्द्वे, बह्वच्त्वेऽपि प्रमाणस्याभ्यर्हितत्वेन "लक्षणहेत्वोः" इत्यादिवद् अल्पाच्तरादपि नयशब्दात्प्रागुपादानम्। तत्. प्रमाणनययो-स्तत्त्वमसाधारणं स्वरूपम्, तस्य व्यवस्थापनं यथाऽवस्थिततत्त्वनिष्टङ्क-नम्, तदेवार्थः प्रयोजनं यत्रोपक्रमणे तत्तदर्थमिति क्रियाया विशेषणमे-तत्, न पुनरिदमितिनिर्दिष्टस्य शास्त्रस्य, आचार्यो हि शास्त्रेण कृत्वा प्रमा-णनयतत्त्वं व्यवस्थापयति, इत्याचार्यव्यापारस्यैवोपक्रमस्य तद्विशेषण-मनुगुणम्, न तु शास्त्रस्य, तस्य करणतयैव तत्रोपयोगात्, कर्तृत्वस्य तत्रौपचारिकत्वात्। इदं स्वसंवेदनप्रत्यक्षेण अन्तस्तत्त्वरूपतया प्रतिभा-समानं प्रकृतं शास्त्रम्, उपक्रम्यते बहिः शब्दरूपतया प्रारभ्यते। इदं च वाक्यं मुख्यतया प्रयोजनमेवप्रतिपादयितुमुपन्यस्तम्, तस्यैव प्राधा-न्येन प्रवृत्त्यङ्गत्वात्। अभिधेयसम्बन्धौ तु सामर्थ्याद् गमयति। तथाहि-- प्रमाणनयतत्त्वमभिधेयम्, 'प्रमाणनयतत्त्व' इत्यवयवेन लक्षितम्, सुखा-नुष्ठेयं चैतत्, इत्यशक्यानुष्ठानाभिधेयाशङ्का निराकारि। प्रयोजनं द्वेधा-- कर्तुः श्रोतुश्च। तत्र कर्तुः प्रयोजनं प्रमाणनयतत्त्वव्यवस्थापनं 'प्रमाण-' इत्यादिसूत्रावयवेन ण्यन्तेन साक्षादाचचक्षे। श्रोतृप्रयोजनं च 'व्यवस्था' इत्युपसर्गधातुसमुदायेनैव तदन्तर्गतं प्रत्याय्यते, प्रमाणनयतत्त्वनिश्चय-मिच्छवो हि श्रोतारोऽहंप्रथमिकयाऽत्र शास्त्रे प्रवर्त्तेरन्। अभिमतं चैतत्-प्रयोजनं द्वयोरपि, इत्यनभिमतप्रयोजनत्वारेका निरस्ता। सबन्धस्त्वभि-धेयेन सह वाच्यवाचकभावलक्षणः शास्त्रस्यावश्यंभावी, इत्यनुक्तोऽप्य-र्थाद् गम्यते, इति सबन्धरहितत्वाऽऽशङ्काऽनुत्थानोपहतैवेति ॥

अत्र धर्मोत्तरानुसारी प्राह--प्रयोजनमादिवाक्येन साक्षादाख्यायत इति न क्षमे। यत. संबद्धमसबद्ध वा तत् तदभिदधीत। यद्यसंबद्धमेव, तदाऽऽदिवाक्यादेव समस्तशास्त्रार्थसदर्भगर्भाविर्भावसंभवात् किं प्रकृतशास्त्रोपक्रमक्लेशेन?। संबद्धं चेत्, तदसंबद्धम्, शब्दार्थयोः संबन्धासंभवात्। तथाहि– अयमनयोर्भवस्तादात्म्यम्, तदुत्पत्ति, वाच्यवाचकभावो वा भवेत्। प्राचीनपक्षे स एवात्मा यस्येति विग्रहे–किं तच्छब्दस्य शब्द एव, तदर्थो वा वाच्यतया त्वच्चित्ते चकास्यात्?। यदि शब्दः, तर्हि समस्ता अप्यर्थाः स्वस्ववाचकस्वभावा बभूवांस; इति युगपदशेषाणा तेषां नि शेषकालं यावद् गुमगुमायमानताऽऽपत्ते'–अयत्नोपनतपणववेणुवीणामृदङ्गसङ्गिसङ्गीतकारम्भनिर्भरमिव त्रिभुवनं भवेत्। अथ तदर्थ, तर्हि तुरगतरङ्गशृङ्गारभृङ्गारादिशब्दोच्चारणे चूरणप्लावनसभोगघट्टनादिप्रसक्ति। किञ्च, अतीतानागतवर्धमानपद्मनाभादिकल्पितकथादिवचसामुच्चारणमचतुरस्रं स्यात्। न हि वृक्षात्मा शिंशपा तमन्तरेणापि क्वापि संपद्यते, तथात्वे हि स्वस्वरूपमेवासौ जह्यात्, कुम्भस्तम्भाम्भोरुहादिवत्। प्रत्यक्षमपि चैतयोस्तादात्म्यं न क्षमते, कर्णकोटरकुटुम्बी खल्वभिलाप' प्रत्यक्षेण लक्ष्यते क्षितितलावलम्बी तु कलशकुलिशादिर्भावराशि, इति कथमनयोरैक्यं शक्येत वक्तुम्?। तन्न तादात्म्यपक्षोपक्षेप सूक्ष्म.॥ तदुत्पत्तिपक्षेऽपि किं शब्दादर्थ उन्मज्जेत्?, अर्थाद् वा शब्द.?। प्राचिकविकल्पे कलशादिशब्दादेव तदर्थोत्पत्तेर्न कोऽपि सूत्रखण्डदण्डचक्रचीवरादिकारणकलापमीलनक्लेशमाश्रयेत्, प्रयोजनवाक्यमात्रादेव च तत्प्रसिद्धे प्रकृतशास्त्रारम्भाभियोगोऽपि निरुपयोग. स्यात्। द्वितीये पुनरनुभवबाधनम्, अधररदनरसनादिभ्य. शब्दोत्पत्तिसंवेदनात्॥ वाच्यवाचकभावपक्षोऽपि न क्षेमकार'। यतोऽसौ वाच्यवाचकयो स्वभावभूतः, तदतिरिक्तो वा भवेत्। आद्यभिदायां वाच्यवाचकावेव, न कश्चिद् वाच्यवाचकभावो नाम संबन्धः। द्वितीयभिदायां तु वाच्यवाचकाभ्यामेकान्तेन भिन्नोऽसौ स्यात्, कथञ्चिद् वा।

आद्यभेदे भेदत्रयं त्रौकते-किमय नित्य , अनित्य', नित्यानित्यो वा?, इति। नित्यश्चेत्, संबन्धिनोरपि•नित्यताऽऽपत्ति , अन्यथा संबन्धस्याप्यनित्यत्वानुषङ्गात् तत्संबन्धिसबद्धसम्बन्धस्वभावप्रच्युतेः । अथानित्य , तदा सर्ववाच्यवाचकेष्वेकः, प्रतिवाच्यवाचकं भिन्नो वा । एकश्चेत्, तर्ह्येकस्मादेव शब्दादशेषपदार्थप्रतिपत्तिप्रसङ्ग. । द्वितीयपक्षे तु किमसौ तत्र संबद्धोऽसबद्धो वा भवेत्?। असंबद्धश्चेत्, तर्हि घटशब्दादपि पटप्रतीति. स्यात्, पटशब्दाच्च घटप्रतीति ; द्वयोरपि वाच्यवाचकभावयोरुभयत्राविशेषात् । अथ संबद्ध , तादात्म्येन, तदुत्पत्त्या वा । न तावत् तादात्म्येन, भेदपक्षकक्षीकारात्। नापि तदुत्पत्त्या । यतः किमयं वाच्योत्पत्तिकाले जायेत, वाचकोत्पत्तिकाले, युगपदुभयोरुत्पत्तिकाले, एकस्य प्रथममुत्पादेऽपि यदैव च द्वितीय उत्पद्यते तदैव वा ?। नाद्यौ पक्षावक्षूणौ, द्वयाधारत्वेनाऽस्याऽन्यतरस्याप्यसत्तायामुत्पत्तिविरोधात्। तार्तीयीकविकल्पे तु क्रमेणोत्पदिष्णव' पदार्था शब्दाश्च अवाच्या अवाचकाश्च भवेयु. । तुरीयपक्षे तु किमसौ वाच्यवाचकाभ्यामेव सकाशादुल्लसेत्, अन्यत एव, अन्यतोऽपि वा ?। आद्यकल्पनायाम्, अनाकलितसङ्केतस्यापि नालिकेरद्वीपवासिन शब्दोच्चारणानन्तरमेव पदार्थप्रतीति स्यात्, तदानीमेव तस्योत्पादात्। अथोत्पन्नोऽप्यसौ सङ्केताभिव्यक्त एव वाच्यप्रतिपत्तिनिमित्तम्, ननु कार्यकारणभावविशेष एवाभिव्यङ्ग्याभिव्यञ्जकभाव ; तत्र चान्यतोऽपीति विकल्पप्रतिविधानमेव समाधानम् । अथान्यतः सङ्केतादेवायमुत्पद्यते, तदप्यवद्यम्, तदाधारस्य धर्मस्यान्यत एवोत्पत्तिविरोधात्-न चैवं वाच्यवाचकयोस्तदुत्पत्तिसम्बन्धोऽस्य कथितः स्यात् । अथ सङ्केतसहकृताभ्यां वाच्यवाचकाभ्यामेष जायते इत्यर्थवानन्यतोऽपीति तृतीय पक्ष कक्षीक्रियते । नन्वसौ सङ्केत प्रतीते वस्तुनि विधीयेत, अप्रतीते वा । न तावदप्रतीते, अतिप्रसङ्गसङ्गते । नापि प्रतीते, यतस्तत्क्षणिकत्वेन तदानीमेव खरसमीरसमीरिताम्भोधरध्वंसमध्वंसिष्ट, इति कुत्र सङ्केत. क्रियेत ?। अथ तत्समानजातीयक्षण-

परम्परायां विद्यमानत्वात् कथं न सङ्केतगोचरता तस्य ?, तदसत्, न खल्वप्रतीतं विद्यमानमपि शब्दगोचरीभूयमुपनेतुं शक्यम्, अतिप्रसक्तेः, यच्च प्रथमं प्रतीतं, तत्तदानीमेव व्यतीतम्। एवं शब्दोऽपि गवादिः प्रतीतोऽप्रतीतो वा तत्र सङ्केत्येत, इति प्राग्वद्दोषाः, सङ्केताभावे च कथं वाच्यवाचकभावोत्पादः ?। स्तां वा ते शब्दार्थव्यक्ती क्षणिकत्वपराङ्मुखे, उत्पादयतां च सङ्केतसहकृते वाच्यवाचकभावम्; किन्तु न ते एव व्यवहारकालमनुगच्छत, इत्यर्थान्तरे शब्दान्तरे च वाच्यवाचकभावोत्पत्तये सङ्केतान्तरं कर्तव्यम्, तथाच व्यवहाराभाव एव भवेत्, प्रतिवाच्यवाचकविशेषं सङ्केतकर्तुरवश्यभावाभावात्। अथ सामान्यगोचर एव सङ्केतः क्रियते; तदेव च वाच्यवाचकभावाधिरूढं कालान्तरव्यक्त्यन्तरानुसरणनैपुण्यधरं च, नित्यत्वाद्, व्यक्तिनिष्ठत्वाच्च, इति चेत्। तन्न मनीषिमान्यम्, सामान्यस्याभावात्। कथं प्रतिभासभाजनमपि तन्नास्ति ?, इति चेत्। न, तत्प्रतिभासासिद्धेः। तथाहि—दर्शने [1]परिस्फुटत्वेनासाधारणमेव रूपं प्रथते, न साधारणम्। अथ साधारणमपि रूपमनुभूयते गौर्गौरिति, तदसाधीय, शाबलेयबाहुलेयादितीव्रतीव्रतरगोशब्दादिरूपविवेकेन तस्याप्रतिभासनात्, न च शाबलेयादिरूपमेव साधारणम्, प्रतिव्यक्तिभिन्नरूपोपलम्भात्। यदि च सामान्याधार एव वाच्यवाचकभावः, तदा न शब्दात्प्रवृत्तिः स्यात्। ज्ञानमात्रलक्षणत्वात् सामान्यार्थक्रियाया, तस्याश्च तदैव निष्पन्नत्वात्। अथापि सामान्यविशेषोभयाधारोऽसौ स्यात्, तदाऽपि तदेव दूषणम्; "प्रत्येकं यो भवेद्दोषो द्वयोर्भावे कथं न सः ?" इति वचनात्। अथ कथमिदं भवेत् ?; न हि स्वतन्त्रौ सामान्यविशेषौ तदधिकरणमभिदध्महे, किन्तु तदुभयात्मकत्वेन जात्यन्तररूपं प्रत्यक्षप्रतीतिसिद्धं कथञ्चिदनुगमव्यावृत्तिमद् वस्तु, इति चेत्। तदिदमपूर्वं किमपि कपटनाटकपाटवप्रकटनम्, सामान्यविशेषोभयात्मकत्वस्य दुर्धरविरोधानुबन्धदुर्गन्धत्वात्। एतेनैव च कथञ्चिद्भेदनित्यानित्यत्वपक्षावपि प्रतिक्षिप्तौ लक्षयितव्यौ।

---

[1] परिस्फुटमसाधारणमेवेति पाठान्तरम्।

तद् नाऽऽदिवाक्यं साक्षात्प्रयोजनं जल्पितुमलम् । न हि शब्दाः श्वपाका इव वराकाः स्वलक्षणब्राह्मणं क्षणमपि स्प्रष्टुमर्हन्ति, विकल्पशिल्पिकल्पितार्थमात्रगोचरत्वात् तेषाम्, विकल्पानां चोत्प्रेक्षालक्षणव्यापारपर्यवसितत्वात् । तदुक्तम्–

"विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः ।
कार्यकारणता तेषां नार्थं शब्दाः स्पृशन्त्यपि " ॥ १ ॥

तदेतदखिलमनिलाऽऽन्दोलिताऽर्कतूलतरलम्, यत एवं वदतस्ते किमादिवाक्योपक्षेपप्रतिक्षेपः काङ्क्षितः?, किं वा कारणान्तरं किमपि तत्करणेऽस्तीति विवक्षितम्?। नाद्यः पक्षः, तत्र तत्र तावकैस्तस्य करणात् । नाप्युत्तरः, तस्य कस्यचिदसत्त्वात् । अथास्त्येव प्रयोजनार्थिप्रवृत्तिनिमित्तार्थसंदेहोत्पादनं तत्, तथाहि– प्रेक्षितप्रयोजनवाक्यानां प्रयोजनार्थिनां तदुपदर्शितप्रयोजनभावाभावपरामर्शपरः संशयः समाविर्भवति, ततोऽपि च संशयतः सस्यसंपत्त्यादिफले कृष्यादौ कृषीबला इव ते तत्र प्रवर्तन्ते, इति चेत् । तदप्राज्यम्, प्रयोजनवाक्योपन्यासात् प्रागप्यस्य साधकबाधकप्रमाणाभावेन भावात् । अथ तदाऽसौ प्रयोजनसामान्ये सत्त्वासत्त्वाभ्यां संशयः, प्रमातारश्च प्रायः प्रयोजनविशेषार्थिन एव, इति तद्विषयसंशयोत्पादनाय युक्तमेवेदम्, इति चेत्। न, अस्यापि प्रागेव भावात्, तथाहि– प्रमाता शास्त्रमात्रमप्यालोक्याऽनुभूतप्रयोजनविशेषेण शास्त्रेणाऽस्य वर्णपदवाक्यकृतं साधर्म्यमवधार्य च किमिदमपि सप्रयोजनम्, अप्रयोजनं वा?, सप्रयोजनमपि किमस्मदभिमतेन तेन तद्वत्, किं वान्येन ?, इत्यादि वाक्यालोकनं विनापि संदिग्धे । अपि च, त्वन्मते न ध्वनिरर्थाभिधानधुरां दधाति, तत्कथं प्रयोजनविशेषविषयसंदेहोत्पादनेऽपि प्रत्यलः स्यात् ? ॥

अर्चटश्चर्वचतुरः पुनराह–इह प्रेक्षावतां प्रवृत्तिः प्रयोजनवत्तया व्याप्ता, ततो यद् निष्प्रयोजनम्, न तत् तैरारम्भणीयम्, यथा काकदन्तपरीक्षा, तथा चैतत्, इति शास्त्रारम्भप्रतिषेधाय प्रयुज्यमानाया व्यापकानुपलब्धेरसिद्धतोद्भावनार्थमादिवाक्यं कर्तव्यमिति । तदप्यनुपप-

श्रम्, वाक्यस्य प्रमाणत्वेनाऽनवस्थिततया प्रयोजनविशेषसद्भावप्रकाशनसामर्थ्यशून्यत्वात् तदसिद्धिमुद्भावयितुमपर्याप्तत्वात् ॥

रामटस्तु प्रकटयति–यद्यपीदं वाक्यमप्रमाणत्वात् प्रयोजनोपस्थापनाद्वारेण निष्प्रयोजनत्वसाधनमसिद्धं विधातुमधीरम्, तथापि विदग्ध संदिग्धं कर्तुं संदिग्धासिद्धमपि च साधनमगमकमेव, यथा समुच्छलद्धवलधूलिपटलं धूमत्वेन संदिह्यमानं धनञ्जयस्येति । तदप्यशस्तम्, अनुपन्यस्तेऽपि प्रयोजनवाक्येऽनुभूतपूर्वप्रयोजनविशेषशास्त्रान्तरसाधर्म्यदर्शनेन शास्त्रमात्रादपि निष्प्रयोजनत्वगोचरसंदेहस्य सद्भावात् । ननु यद्येवमादिवाक्यं पराक्रियते, न तर्हीदं भवद्भिरपि कर्तव्यम्, इति चेत् । नैवम्, कर्तव्यं च तं प्रति, यो नान्यथा प्रयोजनं विदाञ्चकार, वाच्यवाचकोत्पत्तिसमयसम्भूष्णुशक्तिस्वभावस्याऽबाधिततथाऽनुभवेन चित्रज्ञानरूपस्पष्टदृष्टान्तावष्टम्भेन च कृतविरोधपरिहारत्वाद् नित्यानित्यस्य वाच्यवाचकाभ्यां कथञ्चिद्भिन्नस्य सामान्यविशेषोभयस्वभाववस्तुगोचरोपरचितसङ्केताभिव्यक्तस्य वाच्यवाचकभावसम्बन्धस्य बलेन शब्दानामर्थस्य प्रतिपादकत्वं प्रतिपद्य प्रामाण्यं चाङ्गीचकार । एतच्च यथास्थानं समर्थयिष्यते । यः पुनरन्यथाऽपि प्रयोजनमजानाद्, यश्च न शब्दविशेषं प्रमाणत्वेनाऽमंस्त, तौ प्रति न कर्तव्यं च, इत्यनेकान्तो विजयते ॥१॥

अथ प्रमाणस्यादौ लक्षणं व्याचक्षते–

## स्वपरव्यवसायि ज्ञानं प्रमाणम् ॥ २ ॥

अत्र चादग्धदहनन्यायेन यावदप्राप्तं तावद् विधेयम्; इति विप्रतिपन्नानाश्रित्य स्वपरेत्यादिकम्, अव्युत्पन्नान् प्रति प्रमाणम्, प्रमाणप्रमेयापलापिनस्तूद्दिश्य द्वयमपि विधेयम्, शेष पुनरनुवाद्यम् । तत्र प्रमाणमिति प्रागवत् । स्वमात्मा ज्ञानस्य स्वरूपम्; परः स्वस्मादन्य, अर्थ इति यावत्, तौ विशेषेण यथाऽवस्थितस्वरूपेण, अवस्यति निश्चिनोतीत्येवंशीलं यत्, तत् स्वपरव्यवसायि । ज्ञायते प्राधान्येन विशेषो गृह्यते-

ऽनेन इति ज्ञानम्। एतच्च विशेषणम्— अज्ञानरूपस्य व्यवहारधुराधौ-रेयतामनादधानस्य सन्मात्रगोचरस्य स्वसमयप्रसिद्धस्य दर्शनस्य, सन्नि-कर्षादेश्चाऽचेतनस्य नैयायिकादिकल्पितस्य प्रामाण्यपराकरणार्थम्। तस्याऽपि च प्रत्यक्षरूपस्य शाक्यैर्निर्विकल्पकतया प्रामाण्येन जल्पि-तस्य, संशयविपर्ययानध्यवसायानां च प्रमाणत्वव्यवच्छेदार्थं व्यव-सायीति। स्पष्टनिष्टङ्क्यमानपारमार्थिकपदार्थसार्थलुण्टाकज्ञानाद्वैता-दिवादिमतमत्यसितुं परेति। नित्यपरोक्षबुद्धिवादिनां मीमांसकानाम्, एकात्मसमवायिज्ञानान्तरप्रत्यक्षज्ञानवादिनां यौगानाम्, अचेतनज्ञा-नवादिनां कापिलानां च कदाग्रहग्रहं निग्रहीतुं स्वेति। समग्रलक्षण-वाक्यं तु परपरिकल्पितस्यार्थोपलब्धिहेतुत्वादेः प्रमाणलक्षणत्वप्रति-क्षेपार्थम्, तथाहि—अर्थोपलब्धेरनन्तरहेतु, परम्पराहेतुर्वा विवक्षि-श्चक्रे?। परम्पराहेतुश्चेत्। तर्हि, इन्द्रियवदञ्जनादेरपि प्रामाण्यप्रसङ्गः। अथानन्तरहेतुरिन्द्रियमेव प्रमाणम्, तत् किं द्रव्येन्द्रियम्, भावेन्द्रियं वा?। द्रव्येन्द्रियमप्युपकरणरूपम्, निर्वृत्तिरूपं वा?। न प्रथमम्; तस्य निर्वृत्तीन्द्रियोपष्टम्भमात्रे चरितार्थत्वात्। नापि द्वितीयम्; तस्य भावेन्द्रियेणार्थोपलब्धौ व्यवधानादानन्तर्याऽसिद्धेः। भावेन्द्रियमपि लब्धिलक्षणम्, उपयोगलक्षणं वा?। न पौरस्त्यम्, तस्यार्थग्रहणशक्ति-रूपस्यार्थग्रहणव्यापाररूपेण तेन व्यवधानात्। उदीचीनस्य तु प्रमा-णत्वेऽस्मल्लक्षितमेव लक्षणमक्षरान्तरैराख्यातं स्यात्। न च नास्त्ये-वामूदृशमिन्द्रियमिति भौतिकमेव तत् तत्रानन्तरो हेतुरिति वक्तव्यम्, व्यापारमन्तरेणात्मनः स्वार्थसंवित्फलस्यानुपपत्तेः। न ह्यव्यापृत आत्मा स्पर्शादिप्रकाशक, सुषुप्तावस्थायामपि प्रकाशप्रसङ्गात्। न च तदानी-मिन्द्रियं नास्ति, यतस्तदभाव. स्यात्। अथ नेन्द्रियं सत्तामात्रेण तद्धेतुः, किन्तु मनसाऽर्थेन च सन्निकृष्टमिति चेत्। ननु सुषुप्तावस्थायामपि तत्तादृशमस्त्येव, मनसः शरीरव्यापिनः स्पर्शनादीन्द्रियेण, स्पर्शना-देश्च तूलिकादिना सन्निकर्षसद्भावात्। न चाणुपरिमाणत्वाद् मनसः शरीरव्यापित्वमसिद्धमिति वाच्यम्, तत्र तस्य प्रमाणेन प्रतिहत-

त्वात् , तथाहि--मनोऽणुपरिमाणं न भवति, इन्द्रियत्वाद्, नयनवत् । न च शरीरव्यापित्वे युगपज्ज्ञानोत्पत्तिप्रसङ्ग , तादृक्क्षयोपशमविशेषेणैव तस्य कृतोत्तरत्वात् । इति नैतत्प्रमाणलक्षणमक्षूणम् । आचक्ष्महि च मतपरीक्षापञ्चाशति--

"अर्थस्य प्रमितौ प्रसाधनपटु प्रोचु' प्रमाणं परे
तेषामञ्जनभोजनाद्यपि भवेद् वस्तु प्रमाणं स्फुटम् ।
आसन्नस्य तु मानता यदि तदा संवेदनस्यैव सा
स्यादित्यन्धभुजङ्गरन्ध्रगमवत् तीर्थ्यै. श्रितं त्वन्मतम्"॥१॥ इति।

'अनधिगतार्थाधिगन्तृ प्रमाणम्' इत्यपि प्रमाणलक्षण न मीमांसकस्य मीमांसामांसलता सूचयति, प्रत्यभिज्ञानस्याप्रामाण्यप्रसङ्गात् । अथात्रापूर्वोऽप्यर्थ. प्रथते, " इदानीतनमस्तित्व न हि पूर्वधिया गतम्" इति चेत् । इदमन्यत्रापि तुल्यम् , उत्तरक्षणसत्त्वस्य प्राक्क्षणवर्त्तिसंवेदनेनावेदनात्। पूर्वोत्तरक्षणयो. सत्त्वस्यैक्यात् कथ तेन तस्यावेदनम् ?, इति चेत्। प्रत्यभिज्ञागोचरेऽपि तुल्यमेतत् , "रजतं गृह्यमाणं हि चिरस्थायीति गृह्यते" इति वचनात्, प्रागेव तद्वेदने च तदिदानीमस्ति ?, न वा ? कीदृग् वाऽस्ति ? इति तदनन्तरं न कोऽपि संदिहीत ?। ततोऽपार्थकमेवानाधिगतेति विशेषणम् , व्यवच्छेद्याभावात्॥

न चाऽव्यापकत्वदोष प्रकृतलक्षणे, प्रत्यक्षपरोक्षलक्षणव्यक्तिव्यापकत्वात् । नाप्यतिव्यापकत्वकलङ्क., संशयाद्यप्रमाणविशेषेष्ववर्तनात् । नाप्यसंभवसंभव', प्रमाणं स्वपरव्यवसायि ज्ञानम्, प्रमाणत्वान्यथानुपपत्ते., इत्यतस्तत्र स्वपरव्यवसायिज्ञानत्वसिद्धेः ॥

अत्र चायं कण्टकोद्धारप्रकार । तथाहि-- न तावदत्र पक्षप्रतिक्षेपदक्षदोषसंश्लेषः । अय हि भवन् किं प्रतीतसाध्यधर्मविशेषणत्वम्, अनभीप्सितसाध्यधर्मविशेषणता, निराकृतसाध्यधर्मविशेषणत्वं वा भवेत् ?, इति भेदत्रयी त्रिवलीव तरलाक्षीणामुन्मीलति । तत्र न तावत् प्रतीतसाध्यधर्मविशेषणत्वमत्राऽऽख्यायमानं संख्यावतां ख्यातये; यत. प्रसिद्धमेव साध्यं साधयतामेतदुन्मज्जति,

आपो द्रवा इत्यादिवत्, न चैतत् प्रमाणलक्षणमद्यापि परेषां प्रसिद्धिकोटिमाटीकिष्ट । नाप्यत्रानभीप्सितसाध्यधर्मविशेषणता भाषणीया, सा हि स्वानभिप्रेतं साध्य साधयतामधीमता धावति, शौद्धोदनस्य नित्यत्वसाधनवत् , न चार्हतानामेतत् प्रमाणलक्षणमनाकाङ्क्षितम् । नापि निराकृतसाध्यधर्मविशेषणत्वमत्रोपपत्तिपद्धतिप्रतिबद्धतां दधाति ; तद्धि प्रत्यक्षेण, अनुमानेन, आगमेन वा साध्यस्य निराकरणाद् भवेत् । न चैतद् अनुष्णस्तेजोऽवयवी, नास्ति सर्वज्ञ, जैनेन रजनिभोजनं भजनीयमित्यादिवत् प्रत्यक्षानुमानाऽऽगमादिभिर्बाधासंबन्धवैधुर्यं दधानमीक्ष्यते। तस्माद् नाऽत्र दोष पक्षस्य सूक्ष्मोऽप्युत्प्रेक्षितुं पार्यते ॥ नापि हेतो , स खल्वसिद्धता, विरुद्धता, व्यभिचारो वा भवेत् ? । यदि तावद्सिद्धता, तदाऽपि किमन्यतरासिद्धिः, उभयासिद्धिर्वा भवेत् ? । अन्यतरासिद्धिश्चेत् । तदाऽपि वादिन. प्रतिवादिनो वाऽन्यतरस्येयमसिद्धि स्यात् ?। यदि वादिन., तदा कि स्वरूपद्वारेण, आश्रयद्वारेण, भिन्नाधिकरणताद्वारेण, पक्षैकदेशद्वारेण, प्रतिज्ञार्थैकदेशद्वारेण वाऽसौ स्यात् ?। स्वरूपद्वारेण चेत्। तत्किं हेतुस्वरूपे विप्रतिपत्तेः, अप्रतिपत्ते , सन्देहाद् वा ?। न प्राच्य प्रकारः सार , प्रमाणत्वाख्यहेतुस्वरूपे समस्तप्रामाणिकपरिषदामविवादात् । नाऽपि द्वितीय , प्रमाणस्वरूपमप्रतिपद्यमानस्य वादिनोऽप्रामाणिकत्वप्रसङ्गात् । नापि तृतीयः, सर्वथैवानिर्णीतप्रमाणस्वरूपस्य प्रतिपत्तुस्तत्र सन्देहानुत्पादात्, न खलु सकलकालमनाकलितस्थाणुत्वस्य स्थाणुत्वपुरुषत्वोल्लेखी सन्देहः कस्याऽपि संपद्यते, तत्स्वरूपप्रतिपत्तौ वा कचित् कथं सर्वथा प्रमाणस्वरूपे संशयः स्यात् ? । आश्रयासिद्धिव्यधिकरणासिद्धी तु वादिनो जैनस्य दोषावेव न संमतौ, अस्ति सर्वज्ञः सुनिश्चिताऽसम्भवद्बाधकप्रमाणत्वात्, उदेष्यति शकट कृत्तिकोदयात्, इत्यादेर्गमकत्वेन स्वीकृतत्वात् । संमतत्वे वा न तयोरत्रावकाशशङ्काशङ्कुसंकथा, प्रमाणस्य धर्मिणः सकलवादिनामविवादास्पदत्वात्, प्रमाणत्वहेतोस्तत्र वृत्तिनिर्णयाच्च । पक्षैकदेशासिद्धताऽपि नात्र साधीयस्तां

दधाति, सा हि संपूर्णपक्षाव्यापकत्वे सति संभविनी, सचेतनास्तरवः स्वापात्, इत्यादिवत्, न चैतदत्रास्ति। नाप्यनित्यः शब्दोऽनित्यत्वादित्यादिवत् प्रतिज्ञार्थैकदेशासिद्धताऽभिधानीया, तस्यास्तत्त्वत. स्वरूपासिद्धिरूपत्वात्, अन्यथा धर्मिणोऽपि हेतुत्वे तत्प्रसङ्गात्। स्वरूपासिद्धिश्चात्र न यथा स्वेमानमास्तिघ्नुते, तथाऽनन्तरमेव न्यरूपि, इति न वादिन साधनमसिद्धमेतत्। नापि प्रतिवादिन , तत्राप्येवंप्रकारप्रकारकल्पनाप्रबन्धस्य प्राय: समानत्वात् । अत एव वादिप्रतिवाद्युभयस्यापि नासिद्धमिदम् । एव च कथमिदं साधनमसिद्धिसम्बन्धं दधीत ?। नापि विरुद्धताबन्धकीसंपर्ककलङ्कितमेतत्, विपक्षाद् व्यावृत्तत्वात् । नापि व्यभिचारपिशाचसंचारदुस्संचरम् , यतो निर्णीतविपक्षवृत्तित्वेन, सन्दिग्धविपक्षवृत्तित्वेन वाऽत्र व्यभिचार. प्रोच्येत ?। न तावदाद्येन, अनित्यः शब्दः प्रमेयत्वादित्यादिवद् विपक्षे वृत्तिनिर्णयाभावात् , स्वपरव्यवसायिज्ञानस्य हि विपक्षः संशयादिर्घटादिश्च, न च तत्र कदाचन प्रमाणता वरिवर्त्ति । नापि द्वितीयेन, विवादापन्न· पुमान् सर्वज्ञो न भवति, वक्तृत्वात्, इत्यादिवद् विपक्षे वृत्तिसन्देहस्यासभवात्, संशयघटादिभ्य. प्रमाणत्वव्यावृत्तेर्निर्णीतत्वात् । तत्रानैकान्तिकत्वलक्षणमपि दूषणमत्रोपढौकते । इति न हेतोरपि कलङ्ककलिकाऽपि प्रोन्मीलति । निदर्शनं पुनर्नोपदर्शितमेवात्र, इति न तद्दोषोद्धारसरम्भः । भवतु वा तदपि व्यतिरेकरूपं संशयघटादि, न चात्र कश्चिद् दूषणकण·। स खल्वसिद्धसाध्यव्यतिरेक , असिद्धसाधनव्यतिरेक , असिद्धोभयव्यतिरेकः, सन्दिग्धसाध्यव्यतिरेक·, सन्दिग्धसाधनव्यतिरेकः, सन्दिग्धोभयव्यतिरेक., अव्यतिरेकः, अप्रदर्शितव्यतिरेक·,विपरीतव्यतिरेको वा स्यात् ?। तत्र न तावदाद्याः षट्, घटादौ साध्यसाधनव्यतिरेकस्य स्पष्टनिष्टङ्कनात् । नापि सप्तम , व्याप्त्याऽत्र व्यतिरेकनिर्णयात् । नाप्यष्टमनवमौ; यत्र न स्वपरव्यवसायिज्ञानत्व न तत्र प्रमाणत्वमिति व्यतिरेकोपदर्शनात्, इत्यतो निष्कलङ्कादनुमानात् तल्लक्षणसिद्धेरनवद्यमिदं लक्षणम् ॥ २ ॥

---

१ प्रकारो विकल्प ।

अथात्रैव ज्ञानमिति विशेषणं समर्थयन्ते—

**अभिमतानभिमतवस्तुस्वीकारतिरस्कारक्षमं हि प्रमाणम्, अतो ज्ञानमेवेदम् ॥३॥**

अभिमतमुपादेयम्, अनभिमतं हेयम्। तद् द्वयमपि द्वेधा—मुख्यं गौणं च। तत्र मुख्यम्—सुख दु खं च। गौणं पुन.—तयो. कारण कुसुमकुङ्कुमकामिनीकटाक्षादिकम्, खलकलहकालकूटकण्टकादिकं च। एवंविधयोरभिमतानभिमतवस्तुनोर्यौ स्वीकारतिरस्कारौ प्राप्तिपरिहारौ, तयोः क्षमं समर्थम्, प्रापकं परिहारकं चेत्यर्थ॰। अनयोरुपलक्षणत्वादेतदुभयाभावस्वभाव उपेक्षणीयोऽप्यत्रार्थो लक्षयितव्यः। रागगोचरः खल्वभिमत॰, द्वेषविषयोऽनभिमतः, रागद्वेषद्वितयानालम्बनं तु तृणादिरुपेक्षणीय॰। तस्य चोपेक्षकं प्रमाणं तदुपेक्षायां समर्थमित्यर्थ.। हिर्यस्मादर्थे, यस्माद् अभिमतानभिमतवस्तुस्वीकारतिरस्कारक्षमं प्रमाणम्, अत इदं ज्ञानमेव भवितुमर्हति, नाज्ञानरूपं सन्निकर्षादिकम्। प्रयोगश्च—प्रमाणं ज्ञानमेव, अभिमतानभिमतवस्तुस्वीकारतिरस्कारक्षमत्वात्, यत्तु नैव न तदेवम्, यथा स्तम्भ, तथा चेदम्, तस्मात् तथा ॥ ३ ॥

उपपत्त्यन्तरं प्रकटयन्ति—

**न वै सन्निकर्षादेरज्ञानस्य प्रामाण्यमुपपन्नम्, तस्यार्थान्तरस्येव स्वार्थव्यवसितौ साधकतमत्वानुपपत्तेः ॥४॥**

अयमर्थः—यथा संप्रतिपन्नस्य पटादेरर्थान्तरस्याज्ञानरूपस्य स्वार्थव्यवसितौ साधकतमत्वाभावात् प्रामाण्यं नोपपत्तिश्रियमशिश्रियत्, तथा सन्निकर्षादेरपि। प्रयोग—सन्निकर्षादिर्न प्रमाणव्यवहारभाक्, स्वार्थव्यवसितावसाधकतमत्वाद्, यदेवं तदेवम्, यथा पट, तथा चायम्, तस्मात् तथा ॥ ४ ॥

अथास्य साधनस्यासिद्धिसंबन्धवैधुर्यं व्यञ्जयन्त सूत्रद्वयं ब्रुवते—

**न खल्वस्य स्वनिर्णीतौ करणत्वम्, स्तम्भादेरिवाचे-**

तनत्वात्; नाप्यर्थनिश्चितौ, स्वनिश्चितावकर-
णस्य कुम्भादेरिव तत्राऽप्यकरणत्वात् ॥५॥

अस्येति सन्निकर्षादे, करणत्वं साधकतमत्वम्। नाऽप्यर्थनिश्चिता-
विति अस्य करणत्वमिति योग। तत्रापीति अर्थनिश्चितावपीत्यर्थ ।
शेषमशेषमुत्तानार्थम्। प्रयोगौ तु–सन्निकर्षादिः स्वनिर्णीतौ करणं न
भवति, अचेतनत्वात्, य इत्थं स इत्थम्, यथा स्तम्भ, तथा चायम्,
तस्मात् तथा। सन्निकर्षादिरर्थनिश्चितौ करणं न भवति, स्वनिश्चिताव-
करणत्वात्, य एवं स एवम्, यथा स्तम्भ., यथोक्तसाधनसंपन्नश्चा-
यम्, तस्माद् यथोक्तसाध्य ॥

अत्र केचिद् यौगाः सगिरन्ते–सन्निकर्षादिर्न प्रमाणव्यवहारभा-
गित्यादि यद्वादि, तत्रादिशब्दसूचितकारकसाकल्यादेः काममप्रा-
माण्यमस्तु, सन्निकर्षस्य तु प्रामाण्यापकर्षो नोऽमर्षप्रकर्षसिद्धये,
तस्यार्थोपलब्धौ साधकतमत्वावधारणेन स्वार्थव्यवसितावसाधकतम-
त्वादित्यत्र हेत्वेकदेशस्यासिद्धे। यत्तु तत्सिद्धौ साधनमधुनैवाभ्य-
धु, तदसाधीय., प्रदीपेन व्यभिचारात्, तस्य स्वनिश्चितावकरण-
स्याप्यर्थनिश्चितौ करणत्वादिति। तदेतत् त्रपापात्रम्, अर्थोपलब्धौ सन्नि-
कर्षस्य साधकतमत्वासिद्धेः। यत्र हि प्रमात्रा व्यापारिते सत्यवश्यं कार्य-
स्योत्पत्ति, अन्यथा पुनरनुत्पत्तिरेव, तत् तत्र साधकतमम्, यथा छिदायां
दात्रम्; न च नभसि नयनसन्निकर्षसम्भवेऽपि प्रमोत्पत्तिः। रूपस्य सह-
कारिणोऽभावात् तत्र तदनुत्पत्तिरिति चेत्। कथमसौ रूपेऽपि स्यात्?,
न हि रूपे रूपमस्ति, निर्गुणत्वाद् गुणानाम्। नापि तदाधारभूते द्रव्ये
रूपान्तरमस्ति, यावद्द्रव्यभाविसजातीयगुणद्वयस्य युगपदेकत्र त्वयाऽ-
नभ्युपगमात्। अवयवगतं रूपमवयविरूपोपलब्धौ सहकारि सम-
स्त्येवेति चेत्। कथं त्र्यणुकावयविरूपोपलम्भो भवेत्?, न हि द्व्यणु-
कलक्षणावयवत्रयवर्तिरूपमुपलभ्यते, यतः सहकारि स्यात्। अनु-
पलभ्यमानमपि तत् तत्र सहकारीति चेत्। तर्हि कथं न तप्तपाथसि पाव-

कोपलम्भसंभवः ?, तदवयवेष्वनुपलभ्यमानस्य रूपस्य भावात् । यदि च रूपं सहकारि कल्प्यते, तदा समाकलितसकलनेत्रगोलकस्य दूराऽऽसन्नतिमिररोगावयविनः कथं नोपलब्धिः ?। अथाऽत्यन्ताऽऽसत्त्यभावोऽपि सहकारी, न चासौ तिमिरेऽस्तीति चेत्। नन्वियमासत्तिरात्मापेक्षया, शरीरापेक्षया, लोचनापेक्षया, तदधिष्ठानापेक्षया वा विवक्षाचक्रे प्रेक्षादक्षेण ? । आद्ये कल्पे, कथं कस्यापि पदार्थस्योपलब्धिः ?, व्यापकस्याऽऽत्मनः सर्वभावैरासत्तिसंभवात् । द्वितीये, कथं करतलतुलितमातुलिङ्गादेरुपलम्भः ?। तृतीये, कथं क्वापि चाक्षुषप्रत्यक्षमुन्मज्जेत् ?, चक्षुषः प्राप्यकारित्वकक्षीकारेण सर्वत्र स्वगोचरेणाऽऽसत्तिसद्भावात् । तुरीये, कथमधिष्ठानसंयुक्ताञ्जनशलाकाया समुपलब्धिः ?। अथ येनांशेन तस्यास्तत्र संसर्गः स नोपलभ्यत एव । नैवम्, अवयविनो निरंशत्वेन स्वीकारात् । अपि च, कथमुदीचीं प्रति व्यापारितनेत्रस्य प्रमातुर्न कांचन काञ्चनाऽचलोपलब्धिमनुभवामः ? । न च दवीयस्त्वाद् न तत्र नेत्ररश्मयः प्रसर्तुं शक्ताः, तेषां शशाङ्केऽपि प्रसरणाभावापत्तेः । अथ तदालोकमिलितास्ते वर्धन्ते, तर्हि खरतरकरनिकरनिरन्तराऽऽपूरितविष्टपोदरे मरीचिमालिनि सति सुतरां सुराद्रिमभिसर्पतां तेषां वृद्धिर्भवेत् । न च दिनकरमरीचीनां नितरां कठोरत्वेन तैस्तेषां प्रतिघातः, तदाऽऽलोककलापाऽऽकलितकलशकुलिशादिपदार्थानामप्यनुपलम्भापत्तेः । ततो न सन्निकर्षसद्भावेऽप्यवश्यं संवेदनोदयोऽस्ति । नापि तदभावेऽभाव एव, प्रातिभप्रत्यक्षाणामार्षसंवेदनविशेषाणां च तत्कालाऽविद्यमानवस्तुविषयतया सन्निकर्षाभावेऽपि समुद्भवात् । तन्न सन्निकर्षस्य साधकतमत्वं साधुस्वसौधाऽध्यासधैर्यमार्जिजत् । यं च प्रदीपेन व्यभिचारमुदचीचरः, सोऽपि न चतुरचेतश्चमत्कारचञ्चुः, प्रदीपस्य मुख्यवृत्त्या करणत्वानुपपत्तेः, नेत्रसहकारितया करणत्वोपचारात् । यथा चोपचारादर्थव्यवसितौ करणमयम्, तथा स्वव्यवसितावपि, न हि प्रदीपोपलम्भे प्रदीपान्तरान्वेषणमस्ति । किन्त्वात्मनैवात्मानमयं प्रकाशयतीति क

व्यभिचारः ? । तन्न सन्निकर्षस्यार्थव्यवसितावसाधकतमत्वमसिद्धम् ॥

अनयैव दिशा कारकसाकल्यादेरप्यर्थव्यवसितावसाधकतमत्वं समर्थनीयम् । इति न हेत्वेकदेशासिद्धिः ॥ ५ ॥

अथ व्यवसायीति विशेषणसमर्थनार्थमाहुः–

**तद् व्यवसायस्वभावम्, समारोपपरिपन्थित्वात् प्रमाणत्वाद् वा ॥ ६ ॥**

तत्–प्रमाणत्वेन संमतं ज्ञानम्, व्यवसायस्वभावं निश्चयात्मकमित्यर्थः, समारोपः संशयविपर्ययानध्यवसायस्वरूपोऽनन्तरमेव निरूपयिष्यमाणः, तत्परिपन्थित्वं तद्विरुद्धत्वम्, यथावस्थितवस्तुग्राहकत्वमिति यावत्, प्रमाणत्वाद् वा तत् तथाविधम्, वाशब्दो विकल्पार्थः, तेन प्रत्येकमेवामू हेतू प्रमाणत्वाभिमतज्ञानस्य व्यवसायस्वभावत्वसिद्धौ समर्थावित्यर्थः । प्रयोगौ तु–प्रमाणत्वाभिमतं ज्ञानं व्यवसायस्वभावम्, समारोपपरिपन्थित्वात्, प्रमाणत्वाद् वा, यत् पुनर्नैवं न तदेवम्, यथा–घटः, प्रोक्तसाधनद्वयाऽधिकरणं चेदम्, तस्माद् व्यवसायस्वभावमिति ॥

अत्रैकदेशेन पक्षस्य प्रत्यक्षप्रतिक्षेपमाचक्षते भिक्षवः, तथाहि–संहृतसकलविकल्पावस्थायां नीलादिदर्शनस्य व्यवसायवन्ध्यस्यैवानुभवात् पक्षीकृतप्रमाणैकदेशस्य प्रत्यक्षस्य व्यवसायस्वभावत्वसाधनमसाधीयः । तदसाधिष्ठम्, यतः–केन प्रत्यक्षेण तादृक्षस्य तस्यानुभवोऽभिधीयते ? ऐन्द्रियेण, मानसेन, योगिसत्केन, स्वसंवेदनेन वा ? । नाद्येन, तत्रेन्द्रियकुटुम्बस्य व्यापारपराङ्मुखत्वात् । न च द्वितीयेन, तस्येन्द्रियज्ञानपरिच्छिन्नपदार्थानन्तरक्षणसाक्षात्कारदक्षत्वात् । न तृतीयेन, अस्मादृशां योगिप्रत्यक्षस्पर्शशून्यत्वात्, योगी तु तथा जानातीति कोशपानप्रत्यायनीयम् । नापि तुर्येण, यतः–तत् स्वरूपोपदर्शनादेव प्रमाणं स्यात्, अनुरूपविकल्पोत्पादकत्वाद् वा ? । आद्ये पक्षे, प्रत्यक्षं क्षणक्षयस्वर्गप्रापणशक्त्यादावपि प्रमाणतामास्कन्देत् । द्विती-

यपक्षोऽप्यक्षम', संहृतसकलविकल्पावस्थाभाविनीलादिदर्शनानन्तरम्–नीलादिरयमित्यर्थोल्लेखशेखरस्यैव विकल्पस्य प्रायेणानुभवात् । यत्रापि नीलादिज्ञानं ममोत्पन्नमिति ज्ञानोल्लेखी विकल्प:, तत्रापि ज्ञानमात्रोल्लेखित्वादस्य तत्रैव दर्शनस्य प्रामाण्यं स्याद् न तु तन्निर्विकल्पकत्वे । अपि च, विकल्पस्यापि कथं सिद्धि' ? स्वसंवेदनप्रत्यक्षादिति चेत् । तस्यापि स्वरूपोपदर्शनमात्रात् प्रामाण्ये तदेव दूषणम् । विकल्पान्तरोपजननात् पुनरनवस्था । तथा च कथं स्वसंवेदनस्य प्रामाण्यसिद्धि ?, यतस्तेन बाधा पक्षांशे स्यात् । अथ यन्न निर्विकल्पकं तन्नैव विकल्पेन सहोत्पद्यते, यथा–विकल्पो विकल्पान्तरेण, विकल्पेनापि सहोत्पद्यते च प्रत्यक्षम् । न चेदं न सिषेध साधनम्, गन्धर्वविकल्पदशायामपि गो: साक्षात्करणात्, अन्यथा समयान्तरे तत्स्मरणानुत्पत्तिप्रसङ्गात्, इत्यनुमानबाधित: पक्षैकदेश इति चेत् । तदपि कवलितं कालेन, कालान्तरे स्मरणसद्भावाद् व्यवसायात्मकस्यैव प्रत्यक्षस्य प्रसिद्धेर्निर्विकल्पकस्य संस्कारकारणत्वविरोधात् क्षणिकत्वादिवत् । अथाभ्यासप्रकरणबुद्धिपाटवार्थित्वेभ्यो निर्विकल्पकादपि प्रत्यक्षाद् गवादौ संस्कार: स्मरणं च समगंस्त, न तु क्षणक्षयादौ, तदभावादिति चेत् । तदप्यल्पीय', भूयोदर्शनलक्षणस्याभ्यासस्य क्षणक्षयादावक्षोदीयस' सद्भावात्, पुन: पुनर्विकल्पोत्पादरूपस्य चाभ्यासस्य परं प्रत्यसिद्धत्वात्, तत्रैव विवादात् । क्षणभिदेलिमभावाभिधानवेलायां क्षणिकप्रकरणस्यापि भावात् । बुद्धिपाटवस्य क्षणिकत्वादौ नीलादौ च समानत्वात्, तत्प्रत्यक्षस्य निरंशत्वेन कक्षीकारात्, अन्यथा विरुद्धधर्माध्यासेन तस्य भेदापत्तेः । अर्थित्वस्यापि जिज्ञासितत्वलक्षणस्य क्षणिकवादिन. क्षणिकत्वे सुतरां सद्भावाद् नीलादिवत् । अभिलषितत्वरूपस्य तु तस्य व्यवसायजननं प्रत्यनिमित्तत्वात्, अनभिलषितेऽपि वस्तुनि कस्यापि व्यवसायसंभवात् । ततो नाऽनंशवस्तुवादिन: कचिदेव स्मरणं समगत । तथाच–यद् व्यवसाय-

१ नीलादाविति पाठान्तरम् । २ पुस्तकान्तरे नायं पाठ, ।

शून्यं ज्ञानं न तत् स्मृतिहेतु, यथा क्षणिकत्वादिदर्शनम्, तथा चाऽश्वविकल्पकाले गोदर्शनमिति प्रसङ्गः, तथा च तत् स्मृतिहेतुर्न स्याद्, भवति च पुनर्विकल्पयतस्तदनुस्मरणम्, तस्मात् तद् व्यवसायात्मकमिति प्रसङ्गविपर्ययः । एवं च स्मरणात् तस्य व्यवसायात्मकस्यैव सिद्धेर्व्यवसायस्य च व्यवसायान्तरेण समानकालत्वाभावाद् विकल्पेनापि सहोत्पद्यमानत्वादिति हेतुरसिद्धिबन्धकीसम्बन्धबाधित इति सिद्धम् । अथ न व्यवसायस्वभावत्वेन समारोपपरिपन्थित्वप्रमाणत्वहेत्वोर्व्याप्तिरुपाऽपादि, तदभावेऽपि व्यवसायजनकत्वमात्रेण तयोः क्वचिद्भावाविरोधात् । अनुमानं हि व्यवसायस्वभावं सत् समारोपपरिपन्थि, प्रमाणं च, प्रत्यक्षं तु व्यवसायजनकमिति को विरोध ?, इति चेत् । इह तावत् प्रमाणत्वहेतोर्व्याप्तिरुपदर्श्यते--प्रमाणं खल्वविसंवादकमवादिषु सौगताः, अविसंवादकत्वं चार्थप्रापकत्वेन व्याप्तम्, अर्थाप्रापकस्याविसंवादित्वाभावाद् निर्विषयज्ञानवत्, तदपि प्रवर्तकत्वेन व्यापि, अप्रवर्तकस्यार्थाप्रापकत्वात्, तद्वदेव । तदपि विषयोपदर्शकत्वेन व्यानशे, स्वविषयमुपदर्शयतः प्रवर्तकत्वव्यवहारविषयत्वसिद्धेः, न हि पुरुषं हस्ते गृहीत्वा ज्ञानं प्रवर्तयति, स्वविषयं तूपदर्शयत्, प्रवर्तकमुच्यतेऽर्थप्रापकं चेति ॥

तत्रेदं चर्च्यते--किं दर्शनस्य व्यवसायोत्पत्तौ सत्यां विषयोपदर्शकत्वं संजायेत ? समुत्पन्नमात्रस्यैव वा संभवेत् ? । प्राचिकविकल्पे, विकल्पकाले दर्शनस्यैव विनाशात् क्व नाम विषयोपदर्शकत्वं व्यवतिष्ठेत ? । द्वितीयकल्पनायां पुनः--किमनेन कृतक्षौरनक्षत्रपरीक्षाप्रायेण पश्चात्प्रोल्लसता नीलादिविकल्पेनाऽपेक्षितेन कर्तव्यम् ?, तमन्तरेणापि विषयोपदर्शकत्वस्य सिद्धत्वात् । तथा च "यत्रैव जनयेदेनां तत्रैवास्य प्रमाणता" इति राद्धान्तविरोधः, व्यवसायं विनैव विषयोपदर्शकत्वसद्भावे प्रामाण्यस्यापि तं विनैव भावात्, तन्मात्रनिमित्तत्वात् तस्य । कथं चैवं क्षणक्षयस्वर्गप्रापणशक्त्यादावपि दर्शनस्य

१ उदपादीत्यपि पाठः ।

विषयोपदर्शकत्वं न प्रसज्यते ? । अथाध्यवसानपर्यवसानो व्यापारो दर्शनस्य, इत्यध्यवसायव्यापारवत एवास्य विषयोपदर्शकत्वमवतिष्ठते, न पुनस्तमन्तरेणेति चेत् । तदप्यल्पम्[1], निर्विकल्पककार्यत्वेन व्यवसायस्य ततो भिन्नकालत्वात् तेन तस्य व्यापारवत्त्वानुपपत्तेः । अस्तु वैतत्, तथापि तद् व्यापारभूतोऽसौ व्यवसायो दर्शनगोचरस्योपदर्शकः, अनुपदर्शको वा स्यात् ? । यद्युपदर्शकः, तदा स एव तत्र प्रवर्तकः प्रापकश्च स्यात्, ततोऽपि संवादकत्वात् प्रमाणम्, न पुनस्तत्कारणीभूयमाभेजानं दर्शनम् । अथानुपदर्शकः, कथं दर्शनं तज्जननात् स्वविषयोपदर्शकम्, अतिप्रसङ्गात्–संशयविपर्ययकारणस्यापि तस्य स्वविषयोपदर्शकत्वापत्तेः । दर्शनविषयसामान्यव्यवसायित्वाद् विकल्पस्य तज्जनक दर्शनं स्वविषयोपदर्शकम्, नेतरदिति चेत् । तदशस्यम्, दर्शनविषयसामान्यस्यान्याऽपोहलक्षणस्यावस्तुत्वात्, तद्विषयव्यवसायजनकस्य वस्तूपदर्शकत्वविरोधात् । अथ दृश्यविकल्प्ययोरेकीकरणाद् वस्तूपदर्शक एव व्यवसाय इति चेत् । नन्वेकीकरणमेकरूपतापादनम्, एकत्वाध्यवसायो वा ? । प्राचि पक्षे, अन्यतरस्यैव स तत्त्वं स्यात् । द्वितीये तु, उपचरितमेवानयोरैक्यम्, तथा च कथमेष व्यवसायो विषयोपदर्शकः स्यात् ?; न हि षण्ड–कुण्डोध्नीत्वेनोपचरितोऽपि पयसा पात्री पूरयति । किञ्च, तदेकत्वाध्यवसायो दर्शनेन, विकल्पेन, ज्ञानान्तरेण वा भवेत् ? । नाद्येन, दर्शनश्रोत्रियस्याध्यवसायश्वपाकसंस्पर्शासंभवात्, न च तस्य विकल्प्यं विषयतामेति । न द्वितीयेन, विकल्पकौणपस्य दृश्यदाशरथिं गोचरयितुमपर्याप्तत्वात् । नापि तृतीयेन, निर्विकल्पकसविकल्पकविकल्पयुगलानतिक्रमेण दृश्यविकल्प्यद्वयविषयत्वविरोधात् । न च तदुभयागोचरं ज्ञानं तदुभयैक्यमाकलयितु कौशलमालम्बते, तथाहि–यद् यद् न गोचरयति न तत् तदैक्यमाकलयितुं कुशलम्, यथा–कलशज्ञानं वृक्षत्वशिंशपात्वयोः, तथा च प्रकृतमिति । तन्न व्यवसायजन-

---

१ तदसत्यमिति च पाठः ।

नात् प्रत्यक्षस्य प्रामाण्यमुपपादकम् । कथ चैतत् क्षणक्षयस्वर्गप्रापणशक्त्यादावप्यनुरूपं विकल्पं कदाचिद् नोत्पादयति ? स्वविकल्पवासनाबलसमुज्जृम्भमाणाक्षणिकत्वादिसमारोपानुप्रवेशादिति चेत् । तदपेशलम् , नीलादावपि तद्विपरीतसमारोपप्रसक्ते , कथमन्यथा विरुद्धधर्माध्यासात् तद्दर्शनभेदो न भवेत् ?, न ह्यनंशं दर्शनं क्वचित् समारोपाक्रान्तं, क्वचिन्नेति वक्तु युक्तम् । अथ तत्तद्व्यावृत्तिवशादनंशस्यापि दर्शनस्य तथा परिकल्पनाददोष , समारोपाक्रान्तेभ्यो हि व्यावृत्तमसमारोपाक्रान्तम् , असमारोपाक्रान्तेभ्यस्तु व्यावृत्तं समारोपाक्रान्तं तेदुच्यत इति । तदप्यसूपपादम् , यतो व्यावृत्तिरपि वस्त्वंशं कंचिदाश्रित्य कल्प्येत, अन्यथा वा ?। अन्यथा चेत् , चित्रभानुरप्यचन्द्रव्यावृत्तिकल्पनया चन्द्रतामाद्रियेत । वस्त्वंशाश्रयणपक्षे तु, सिद्धो विरुद्धधर्माध्यास , तथाहि–तद्दर्शनं येन स्वभावेन समारोपाक्रान्तेभ्यो व्यावर्तिष्ट, न तेनैवाऽसमारोपाक्रान्तेभ्योऽपि, येन चाऽमीभ्यो व्यावर्तत न तेनैव तेभ्योऽपि, तयोर्द्वयोरपि व्यावृत्तयोरैक्यापत्ते.। यदि पुनः स्वभावभेदोऽपि वस्तुनोऽतत्स्वभावव्यावृत्त्या कल्पित एवेति मतं, तदा कल्पितस्वभावान्तरकल्पनायामनवस्था स्वैमानमास्तिघ्नुवीत । ततो न व्यवसायजननादस्य प्रामाण्यमनुगुणम् , किन्तु व्यवसायस्वभावत्वादेव ।एवं प्रामाण्यसहचर समारोपपरिपन्थित्वमपि वाच्यम्॥ ६ ॥

समारोपपरिपन्थित्वादित्युक्तमिति समारोपं प्ररूपयन्ति–

**अतस्मिँस्तदध्यवसायः समारोपः ॥ ७ ॥**

अतत्प्रकारे पदार्थे तत्प्रकारतानिर्णयः समारोप इत्यर्थः ॥ ७ ॥

अथैनं प्रकारत प्रकटयन्ति–

**स विपर्ययसंशयानध्यवसायभेदात् त्रेधा ॥ ८ ॥**

उत्तानार्थमदः ॥ ८ ॥

अथोद्देशानुसारेण विपर्ययस्वरूप तावत् प्ररूपयन्ति–

**विपरीतैककोटिनिष्टङ्कनं विपर्ययः ॥ ९ ॥**

विपरीताया अन्यथास्थिताया एकस्या एव कोटेर्वस्त्वंशस्य निष्टङ्कनं निश्चयनं विपर्यय इति ॥ ९ ॥

अत्रोदाहरन्ति–

## यथा शुक्तिकायामिदं रजतमिति ॥ १० ॥

यथेत्युदाहरणोपन्यासार्थं, अग्रेऽपि सर्वत्र। शुक्तिकायामरजताकारायामिदं रजतमिति रजताकारतया ज्ञानं विपर्ययो विपरीतख्यातिरित्यर्थः। इतिशब्द उल्लेखार्थं, अग्रेऽपि। उदाहरणसूत्रं चेदम्–अन्येषामपि प्रत्यक्षयोग्यविषयविपर्ययाणा पीतशङ्खज्ञानादीनाम्, तादितरप्रमाणयोग्यविषयविपर्ययाणां हेत्वाभासादिसमुत्थज्ञानानां चोपलक्षणार्थम् ॥

अत्र विवेकाख्यातिवादी वदति– विवादास्पदमिदं रजतमिति प्रत्ययो न वैपरीत्येन स्वीकर्तव्य, तथा विचार्यमाणस्य तस्यानुपपद्यमानत्वात्, यद् यथा विचार्यमाण नोपपद्यते, न तत् तथा स्वीकर्तव्यम्, यथा–स्तम्भः कुम्भरूपतयेति। न चेदं साधनमसिद्धिमधारयत्, तथाहि–किमिदं प्रत्ययस्य वैपरीत्यं स्यात्?–अर्थक्रियाकारिपदार्थाप्रत्यायकत्वम्, अन्यथा प्रथनं वा?। आद्ये भेदे, विवादास्पदप्रत्ययप्रत्यायिते पदार्थे किमर्थक्रियामात्रमपि नास्ति, तद्विशेषसाध्या वा सा न विद्यते?। नाद्य. पक्षः, शुक्तिसाध्यायास्तस्या भावात्। द्वितीये तु, ज्ञानकाले सा नास्ति, कालान्तरेऽपि वा?। ज्ञानकाले तावत् तथ्यकलधौतबोधेऽपि क्वापि सा नास्त्येव। कालान्तरे तु प्रचुरतरसमीरसमीरणाशुव्यपायिपयोबुद्बुदबोधेऽपि सा न विद्यत एव। तन्नार्थक्रियेत्यादिपक्ष. क्षेमकार। तत्पुरस्सरपक्षे तु, तथाविधवैपरीत्य तस्य स्वेनैव, पूर्वज्ञानेन, उत्तरज्ञानेन वाऽवसीयेत?। न स्वेनैव, तेन स्वस्य वैपरीत्यावसाये प्रमातु' प्रवृत्त्यभावप्रसङ्गात्। अथ पूर्वज्ञानेन, किं स्वकालस्थेन, तत्कालस्थेन वा?। नाद्येन, तत्काले वैपरीत्यास्पदसंवेदनस्यासत्त्वात्। नापि द्वितीयेन, ज्ञानयोर्यौगपद्यासंभवात्। अथोत्तरज्ञानेन, तत्कि विजातीयम्, सजातीयं वा स्यात्?। विजातीय-

मप्येकसन्तानम्, भिन्नसन्तानं वा ?। भेदद्वयेऽपि घटज्ञानं घटज्ञानस्य वैपरीत्यावसायि भवेत्। सजातीयमप्येकविषयम्, भिन्नविषयं वा ?। एकविषयमप्येकसन्तानम्, भिन्नसन्तानं वा ?। द्वयमपीदं संवाददत्तहस्तावलम्बं कथं वैपरीत्यावबोधधुराधौरेयतां दधीत ?। भिन्नविषयमप्येकसन्तानम्, भिन्नसन्तान वा ?। उभयत्रापि पटज्ञानं पटान्तरज्ञानस्य तथा भवेत्। अथ न सर्वमेवोत्तरज्ञान प्राक्तनस्याऽन्यथात्वावबोधबद्धकक्षम्, किन्तु यदेव बाधकत्वेनोल्लसति। ननु किमिदं तस्य तद्बाधकत्वम् ?—तदन्यत्वम्, तदुपमर्दकत्व, तस्य स्वविषये प्रवर्त्तमानस्य प्रतिहन्तृत्वम्, प्रवृत्तस्यापि फलोत्पादप्रातिबन्धकत्वं वा ?। प्राचि पक्षे, मिथ्याज्ञानमपि तस्य बाधक स्यात्, अन्यत्वस्योभयत्राऽविशेषात्। द्वितीये घटज्ञानं पटज्ञानस्य बाधकं स्यात्, तस्यापि तदुपमर्देनोत्पादात्। तृतीये, न प्रवृत्तिस्तस्य तेन प्रतिहन्तु शक्या, यत्र क्वचन गोचरे प्रागेव प्रवृत्तत्वात्। तुरीयेऽपि, न फलोत्पत्तिस्तस्य तेन प्रातिबन्धुं पार्यते, उपादानादिसंविदोऽपि प्रथममेव समुत्पन्नत्वात्। किञ्च, विपरीतप्रत्यये रजतमसच्चकास्ति, सद् वा ?। असच्चेत्। असत्ख्यातिरेवेयं स्यात्। सच्चेत्। तत्रैव, अन्यत्र वा ?। यदि तत्रैव, तदा तथ्यपदार्थख्यातिरेवेयं भवेत्। अन्यत्र तु सतः कथं तत्र प्रतीतिः ?, पुरस्सरगोचर एव चक्षुरादेर्व्यापारात्। दोषमाहात्म्यादिति चेत्। न, दोषाणामिन्द्रियसामर्थ्यकदर्थनमात्रचरितार्थत्वेन विपरीतकार्योत्पत्ति प्रत्यकिञ्चित्करत्वात्। ततस्तथा विचार्यमाणस्य तस्यानुपपद्यमानत्वमसिध्यदेव। नापि व्यभिचारि, विपक्षादत्यन्तं व्यावृत्ते, अत एव न विरुद्धमपि। ततः सत्यमेवैतत् संवेदनद्वयम्—इदमिति प्रत्यक्षम्, रजतमिति तु स्मरणम्, करणोद्भवदोषवशाच्छुक्तिरजतयोः प्रत्यक्षस्मरणयोश्च भेदाप्रतिभासाद् भेदाख्यातिरियमुच्यत इति ॥

अत्राभिदध्महे—ये तावत् साधनासिद्धिविध्वंसनाय व्यधायिषत विकल्पाः, तत्र शुक्त्यादिरूपतयाऽन्यथास्थितार्थस्यान्यथारजताद्यर्थ-

प्रकारेण यत्प्रथनं तत्स्वरूपं वैपरीत्यं नेदं रजतमित्येवं तदुपमर्दतः पश्चादुज्जृम्भमाणेन बाधकेनाऽवधार्यत इति ब्रूमः। तथा च अन्यथाप्रथनोत्तरज्ञानतदुपमर्दकत्वविकल्पाभ्यां शेषं तु विकल्पनिकुरम्बं तुण्डताण्डवाडम्बरविडम्बनामात्रफलमेव। अथ विजातीयं सजातीयं वा तदित्यादिप्रकारेषु किमुत्तरं ते स्यात्? ननु वितीर्णमेव। अस्तु यत्किञ्चित्, तदुपमर्देन चेदुत्पद्यते, तदा तदखिलं बाधकं सत् तस्य तथात्वमाविष्करोतीति। उपमर्दश्च न प्रध्वंसः, यतः पटज्ञानप्रध्वंसेनोत्पद्यमानस्य घटज्ञानस्य बाधकत्वं स्यात्, किन्तु तत्प्रतिभातवस्त्वसत्त्वख्यापनम्—यन्मदीयवेदने रजतमिति प्रत्यभात्, तद् रजतं न भवत्येवेति। अपि च, भेदाख्यातावपि प्रत्यक्षस्मरणयोर्भेदाख्यानं किं स्वेनैव वेद्यते? इत्यादिसकलविकल्पपेटकमाटीकत एव, इति स्ववधाय कृत्योत्थापनमेतद् भवत। [1]अथ प्रकृतज्ञाने रजतप्रतिभाने कथं तेन शुक्तिकाऽपेक्ष्येत?। तत्र, संवृतस्वाकारायाः समुपात्तरजताकारायाः शुक्तिकाया एवात्र प्रतिभानात्। वस्तुस्थित्या हि शुक्तिरेव सा, त्रिकोणत्वादिविशेषग्रहणाभावात्तु संवृतस्वाकारा, चाकचिक्यादिसाधारणधर्मदर्शनोपजनितरूप्यस्मरणाऽऽरोपितरजताकारत्वाच्च समुपात्तरजताकारा; इत्यभिधीयते। यत् खलु यत्र कर्मतया चकास्ति तत् तत्राऽऽलम्बनम्, एतच्च शृङ्गग्राहिकया निर्दिश्यमानायां शुक्तौ समस्त्येव। सैव हि दोषवशात् तथा प्रतिभाति। दृष्टं च दोषवशाद् विपरीतकार्योत्पादकत्वम्, यथाक्षिप्तमन्दाक्षलक्ष्मीकाया कुलपक्ष्मलाक्ष्यास्तद् तद् विरुद्धवीक्षणभाषणादि। त्वयाऽपि चैतदङ्गीकृतमेव, प्रकृतरजतस्मरणस्याऽनुभूतरजतदेशानुसारिप्रवृत्तिजनकत्वौत्सर्गिककार्यपरिहारेण पुरोदेश एव प्रवृत्तिजनकत्वस्वीकारात्। भेदाऽग्रहणं सहकारिणमपेक्ष्य प्रकृतरजतस्मरणस्य तदविरुद्धमिति चेत्। दोषान् सहकारिणोऽपेक्ष्य हृषीकस्यापि तत् तथास्तु। किञ्च, प्रत्यभिज्ञानेन रजतसंवित्तेः शुक्तिगोचरत्वमवस्थाप्यते—यदेव मम रजतत्वेन पूर्वमचकात्, तदेवेदं शुक्तिशकलम्, इत्येवं

[1] अथ पूर्वाऽनुभूतरजतप्रतिभाने इति पाठान्तरम्।

तस्योत्पादात् । अनुमानेन च-विवादपदं रजतज्ञानं शुक्तिगोचरम्, तत्रैव प्रवर्तकत्वाद्, यदेवं तदेवं यथा सत्यरजतज्ञानं रजतगोचरम्, इति विचारेण वैपरीत्यस्योपपत्तेरसिद्धिदुर्गन्धमेव त्वत्साधनमिति स्थितम् । यच्चोक्तम्-शुक्तिरजतयोः प्रत्यक्षस्मरणयोश्च भेदाप्रतिभासादिति, तत्र भेदाप्रतिभासस्तुच्छः कश्चिदुच्येत, अभेदप्रतिभासो वा ? । नाद्यः, प्राभाकरैरभावानभ्युपगमात् । नापि द्वितीयः, विपरीतख्यातिप्रसक्तेः, भिन्नयोरभेदेन प्रतिभासात् । अथ भेदो व्यावर्तकधर्मयोगः, तस्य चाप्रतिभासः साधारणधर्मप्रतिभास इति चेत् । न, शुक्तिज्ञानेऽन्त्येऽपि तस्य भावाद्, दीप्रतादेस्तत्राऽपि प्रतिभासात् । अथ न तत्र तस्यैव प्रतिभासः, त्रिकोणतादिव्यावर्तकधर्माणामपि प्रतिभासादिति चेत् । तर्हि सावधारणः साधारणधर्मप्रतिभासः प्रकृतरजतबोधेऽपि नास्त्येव, रजतगतस्य रजतत्वस्येव शुक्तिगतस्य स्वनियतदेशकालस्मर्यमाणरजतासंभविनियतदेशकालत्वस्य व्यावर्तकधर्मस्य प्रतिभानादिति । ग्रहणस्मरणसंवित्ती अपि स्वसंविदिते प्राभाकराणाम् । ते च यदि स्वरूपेण प्रतिभातः, तदा न रजतार्थिनस्तथा प्रवृत्तिः स्यात् । अथ ग्रहणं स्मरणरूपतया प्रतिभाति, तदा विपरीतख्यातेस्स्पष्टतया प्रतिभानम्, अनुभूतरजतदेशे प्रवृत्तिश्च स्यात् । अथ स्मरणं ग्रहणरूपतया; तदाऽपि विपरीतख्यातिरेव । प्रभूतं चात्र वक्तव्यम्, तच्चोक्तमेव बृहद्वृत्तौ वितत्य श्रीपूज्यैः ॥ १० ॥

अथ संशयं लक्षयन्ति-

**साधकबाधकप्रमाणाभावादनवस्थिताऽनेककोटिसंस्पर्शि ज्ञानं संशयः ॥ ११ ॥**

उल्लिख्यमानस्थाणुत्वपुरुषत्वाद्यनेकांशगोचरयोः साधकबाधकप्रमाणयोरनुपलम्भादनवधारितनानांशावलम्बिविधिप्रतिषेधयोरसमर्थं संवेदनं संशय इत्यर्थः, समिति समन्तात् सर्वप्रकारैः शेत इवेति व्युत्पत्तेः ॥ ११ ॥

उदाहरन्ति–

यथाऽयं स्थाणुर्वा पुरुषो वा ॥ १२ ॥

व्यक्तम् । अयं च प्रत्यक्षविषये संशयः । परोक्षविषये तु यथा–क्वाऽपि विपिनप्रदेशे शृङ्गमात्रदर्शनात् किं गौरयं स्याद् गवयो वा ? इत्यादि ॥ १२ ॥

अथाऽनध्यवसायस्वरूपं प्ररूपयन्ति–

किमित्यालोचनमात्रमनध्यवसायः ॥ १३ ॥

अस्पृष्टविशिष्टविशेषं किमित्युल्लेखेनोत्पद्यमानं ज्ञानमात्रमनध्यवसायः प्रोच्यते । समारोपरूपत्वं चाऽस्यौपचारिकम्, अतस्मिंस्तदध्यवसायस्य तल्लक्षणस्याऽभावात् । समारोपनिमित्तं तु यथार्थापरिच्छेदकत्वम् ॥ १३ ॥

उदाहरन्ति–

यथा गच्छत्तृणस्पर्शज्ञानम् ॥ १४ ॥

गच्छतः प्रमातुस्तृणस्पर्शविषयं ज्ञानमन्यत्राऽऽसक्तचित्तत्वादेवंजातीयकमेवंनामकमिदं वस्तु, इत्यादिविशेषानुल्लेखि किमपि मया स्पृष्टम्, इत्यालोचनमात्रमित्यर्थः । प्रत्यक्षयोग्यविषयश्चायमनध्यवसायः । एतदुदाहरणदिशा च परोक्षयोग्यविषयोऽप्यनध्यवसायोऽवसेयः, यथा–कस्यचिदपरिज्ञातगोजातीयस्य पुंसः क्वचन वननिकुञ्जे सास्नामात्रदर्शनात् पिण्डमात्रमनुमाय को नु खल्वत्र प्रदेशे प्राणी स्यात् ? इत्यादि ॥ १४ ॥

अथ प्रमाणलक्षणसूत्रोपात्तं परशब्दं व्याख्यान्ति–

ज्ञानादन्योऽर्थः परः ॥ १५ ॥

ज्ञानाद् ग्राहकात् सकाशाद्, अन्यो ग्राह्यतया पृथग्भूतोऽचेतनः सचेतनो वा, अर्थोऽर्थक्रियार्थिभिरर्थ्यमानः, परः परशब्दवाच्यः ॥

अत्र शून्यवादिनः कतिपयविकल्पाटोपोच्चण्डतुण्डमुत्स्वप्रायन्ते–अहो ! आर्हताः ! किं ज्ञानम् ?, कश्चार्थः ? । ग्राहकमन्तर्ज्ञानम्, ग्राह्यो

बाह्योऽर्थ इति चेत् । कस्य ज्ञानं ग्राहकम् ?। अर्थस्य चेत् । अर्थ एवानर्थमूलं तर्हि स एवोन्मूलनीय , तथाहि--किमयमणुरूपः, स्थूलस्वरूप , तदुभयस्वभावः, अनुभयस्वभावो वा ? । अणुरूपश्चेत् । कुतोऽणूनामवधारणम् ?--प्रत्यक्षाद्, अनुमानाद् वा ? । प्राचि पक्षे, किं योगिप्रत्यक्षाद्, अस्मदादिप्रत्यक्षाद् वा ?। धुर्य श्रद्धामात्राऽवधार्य । द्वितीयस्तु, अनुभूतिपराभूत --न हि वयमयं परमाणुरयं परमाणुरिति स्वप्नेऽपि प्रतीमः, स्तम्भोऽय कुम्भोऽयमित्येवमेव न सदैव संवेदनोदयात् । अथाऽनुमानात् परमाणुप्रवेदनम् । किमवधृतसाध्यसाधनसंबन्धात् , तदितरस्माद् वा ? । न तावत् तदितरस्मात् , अतिप्रसङ्गसङ्गमात् । प्राचिकप्रकारे तु, संबन्धाऽवधारणं प्रत्यक्षेण, अनुमानेन वा ? । न प्रत्यक्षेण, अणूनामतीन्द्रियत्वेन तै सहाऽविनाभावस्य क्वापि लिङ्गे ग्रहीतुमशक्यत्वात् । अनुमानेनाऽपि तेनैव, अनुमानाऽन्तरेण वा तदवधारणम् ? । न तावत् तेनैव, परस्पराऽऽश्रयप्रसङ्गात्--सति हि संबन्धावधारणे तदनुमानोत्थानम्, सति चास्मिंस्तदवधारणमिति । अनुमानाऽन्तरमपि गृहीतप्रतिबन्धम् . अगृहीतप्रतिबन्धमेव वा प्रवर्तेत ?, इत्याद्यावृत्तावनवस्थादौ स्थ्योपस्थापनम् । तद् नानुमानादपि परमाणुप्रतीति. । किञ्च, अमी परमाणवो नित्या वा स्युः, अनित्या वा ?। नित्याश्चेत् । किमर्थक्रियाकारिणः, अकिञ्चित्करा वा ? । उदीचीनस्तावत्पक्षः क्षोदीयान्, अन्तरिक्षवृक्षवत् तेषामसत्त्वापत्तेः । अर्थक्रियाकारित्वं तु तेषां क्रमेण, युगपद् वा ? । क्रमेण चेत् । किं स्वभावाभेदेन, तद्भेदेन वा ? । स्वभावाभेदभिदायाम् , ते येनैव स्वभावेन प्राच्य कार्यमर्जयन्ति, तेनैवोत्तरमपि , यद्वा येनैवोत्तरम्, तेनैव प्राच्यमपि ? । प्रथमे, प्रथमकार्यकाल एवोत्तरस्याप्युत्पत्तिप्रसक्तिः । तद्वद् द्वितीये द्वितीयकार्यकाल एव प्रथमस्याऽपि प्रभवप्राप्तिः । तद्वदेव स्वभावभेदपक्षे क्षणिकत्वापत्तिः, तल्लक्षणत्वात् क्षणभङ्गुरतायाः । युगपत्पक्षे, सकृदेव सकलस्वकार्यकार्यपुञ्जस्याऽर्जितत्वाद् द्वितीयादिक्षणे तेषामसत्त्वं स्यात् । तद् नाऽमी नित्याः । अनि-

त्याश्चेत् क्षणिका, कालान्तरस्थायिनो वा ? । क्षणिकाश्चेत् । किम-कस्माद् भवन्ति, कारणाद् वा कुतोऽपि ?। अकस्माच्चेत्। ननु किमिह कारणप्रतिषेधमात्रम्, भवनप्रतिषेध, स्वात्महेतुकत्वम्, निरुपाख्य-हेतुकत्वं वा विवक्षितम् ? । आद्ये, भवनस्यानपेक्षत्वेन सदा सत्त्व-स्याऽसत्त्वस्य वा प्रसक्ति. "नित्य सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात्" इत्युक्ते. । द्वितीये, प्रागिव पश्चादपि नाऽमी भवेयु । तृतीये, कथ-मुत्पत्तिस्तेषाम् ?, स्वयमसतां स्वोत्पत्तौ व्यापारव्याहतेः । तुरीये, प्रागपि सत्त्वापत्तेस्तेषां सनातनत्वं स्यात् । कारणाद् भवनपक्षे तु स्थूलं किञ्चित् तेषा कारणम्, परमाणव एव वा ?। न स्थूलम्, परमा-णुरूपार्थपक्षस्यैव कक्षीकारात् । परमाणवश्चेत् । ते किं सन्त, अस-न्तः, सदसद्रूपा, अनुभयस्वभावा वा स्वकार्याणि कुर्यु. ?। सन्तश्चेत्। किमुत्पत्तिक्षण एव, द्वितीयादिक्षणेऽपि वा ? । नाद्य, तदानीमुत्प-त्तिमात्रव्यग्रत्वात् तेषाम्। अथ "भूतिर्येषा क्रिया सैव कारणं सैव चोच्यते" इति वचनाद् भवनमेव तेषामुत्तरोत्पत्तौ कारणतेति चेत्। एवं तर्हि रूपाणवो रसाणूनाम्, ते च तेषामुपादानं स्यु, उभयत्र भवनाविशेषात् । न द्वितीय, क्षणक्षयक्षयापत्ते. । अथाऽसन्तस्ते तदुत्पादका, तर्हि तत्सत्ताक्षणमेकमपहाय सर्वदा तदुत्पादप्रसङ्ग, तद्भवनस्य सर्वदाऽविशेषात् । सदसद्रूपपक्षस्तु दुर्निरोधविरोधानु-बन्धदुर्धरः—यदि हि ते सन्तः कथमसन्त. ?, तथा चेत् कथं सन्त ? । अनुभयस्वभावभेदोऽप्यसाधु, विधिप्रतिषेधयोरेकतरप्रतिषेधेऽन्यत-रस्यावश्यंभावात् । तन्नाणवः क्षणिका सूक्ष्ममनीषामार्गमैयरु. । नापि कियत्कालस्थायिन, क्षणिकपक्षोपक्षिप्तप्रतीकारस्याऽत्राऽप्यवता-रात् । किञ्च, कियत्कालस्थायिनोऽप्यमी किमर्थक्रियापराङ्मुखा, तत्कारिणो वा भवेयु ? । प्रथमभिदायाम्, अम्बरोद्भवाम्भोरुहसौ-रभवदसत्त्वापत्ति. । उदग्विकल्पे, किमसद्रूपम्, सद्रूपम्, उभय-रूपम्, अनुभयरूपं वा ते कार्यं कुर्वीरन् ? । असद्रूप चेत् । कथ करिकेसरकलापादेरपि न करणम् ? । सद्रूप चेत् । कथं तस्य क-

रणम् ?, सतोऽपि करणे कथं कदाचित् क्रियाविरतिः ? । तृतीयतुरीयभेदौ तु प्राक्प्रोक्तसदसद्रूपादिभेदवद् भञ्जनीयौ । तन्नाणुरूपोऽर्थः सर्वथा स्थेमानमातेनिवान् । नापि स्थूलरूपः, यतस्तादृशोऽप्यसौ नित्य, अनित्यो वा स्यात् ? । न तावद् नित्यः, परमाणुनित्यतानिराकरणानुसारेणाऽस्यापि व्यपासितु शक्यत्वात् । नाप्यनित्यः, यतस्तस्य समुत्पादे स्थूलमेव किञ्चित् कारणम्, अणवो वा ? । प्राच्यः पक्षः स्थवीयान्, स्थूलाद्वैतवादस्य वावदूकानां वदितुमयुक्तत्वात्, सूक्ष्मापेक्षयैव स्थूलस्य व्यवस्थानात्, कुंवलापेक्षया कुवलयस्येव[1] । अथाणवस्तत्कारणम्, तर्हि तदप्रेतनस्तदुभयस्वभावार्थपक्षः कक्षीकृतः स्यात् । अस्त्वयमेवेति चेत् । तर्हि ते निरातिशयाः, सातिशया वा स्थूलमर्थं प्रथयेयुः ? । आद्ये भेदे, भूर्भुव स्वस्त्रयीकुहरकोणकुट्टितैकैकपरमाणुभिर्विशकलितैरपि सदैव तदुत्पादनप्रसङ्गः । द्वितीये तु, कस्तेषामतिशयः–एकदेशावस्थितिः, संयोग, क्रिया वा ?। प्रथमपक्षे, क्षोणीमण्डलाऽऽलम्बिपरिमण्डलै. स्थूलैककार्यक्रियाप्रसक्तिः, तस्यैकदेशरूपत्वात् । अथ यावति प्रदेशे कतिपयेऽपि परमाणवः कार्यमेकमर्जयन्ति तावानेवैकः प्रदेशः, न सकलमिलामण्डलम्; इति चेत् । तर्हीतरेतराश्रयपिशाचप्रवेशः–सिद्धे हि कार्ये देशैक्यसिद्धिः, तत्सिद्धौ च तत्सिद्धिरिति । संयोगश्चेदतिशयः, स किं नित्यः, अनित्यो वा ? । यदि नित्यः, तदा सदाऽपि तदुत्पाद्यकार्योत्पादप्रसङ्गः । अनित्यश्चेत् । किमन्यत एव, तेभ्योऽपि वा प्रादु.ष्यात् ?। नाद्यो भेदः, तदाधारधर्मस्याऽन्यत एवोत्पत्तिविरोधात् । द्वितीये तु, तदुत्पत्तावपि निरातिशयाः, सातिशया वा ते व्याप्रियेरन् ?। प्राचि, प्राचीन एव दोषः । द्वितीये तु, अतिशयोत्पत्तावप्यतिशयान्तरेण भाव्यम्, तत्रापि तेन, इत्यनवस्थाकदर्थनम् । किञ्च, अयं संयोगस्तत्स्वभावभूतः, तत्पृथग्भूतो वा ?। प्राच्ये, परमाणव एव न कश्चित् संयोगो नाम । द्वितीये तु, सर्वथा पृथग्भूतः, कथञ्चिद् वा । कथञ्चित्पक्षस्तावद्

[1] बदरापेक्षया कुंवलयस्य स्थूलत्वम् ।

विरोधबाधितः । सर्वथापक्षे तु, संबद्ध', असंबद्धो वा तत्रासौ स्यात् ?। असंबद्धविधायां तेषामेष इति संबन्धायोगः । संबद्धस्तु, संयोगेन, समवायेन, तादात्म्येन, तदुत्पत्त्या, अविष्वग्भावेन वा ? । न संयोगेन, तस्य गुणरूपे संयोगे संभवाभावात्, "निर्गुणा गुणाः" इति वचनात् । न समवायेन, यतो यावदयमेकं संयोगमेकत्र संबन्धयति, तावदन्यत्राऽप्येनं किं न संबन्धयेत् ?, अस्य सर्वत्रैक्यात् । न तादात्म्येन, भेदपक्षकक्षीकारात् । नापि तदुत्पत्त्या, परमाणुभ्यः संयोगोत्पादस्य प्रागेव व्यपास्तत्वात् । नाप्यविष्वग्भावेन, तस्य कथञ्चित् तादात्म्यरूपत्वात्; तत्र च कथञ्चिदित्यन्धपदम्, विरोधप्रारोधदुर्धरत्वात् । किञ्च, अयं संयोग. सर्वात्मना, एकदेशेन वाऽणूनां प्रणिगद्येत ? । प्रथमे, पिण्डोऽणुमात्रः स्यात् । द्वितीये, षट्केन युगपद्योगात् परमाणोः षडशता स्यात्; इति परमाणुकथाऽप्यस्तमियात् । तन्न संयोगोऽतिशयः । एतेन क्रियारूपातिशयपक्षोऽपि प्रतिक्षिप्त ।

किञ्च, अय स्थूलोऽवयवी निराधार', साधारो वा ?। न तावद् निराधारः, साधारप्रतीतिविरोधात् । साधारश्चेत् । किमेकावयवाधारः, अनेकावयवाधारो वा ? । प्रथमे, प्रतीतिविरोधः, तथाहि–प्रतीतिरिहाऽवयवेष्ववयवीति, नावयवेऽवयवीति । अथानेकावयवाधारः, तत्राप्यविरोध्यनेकावयवाधारः, विरोध्यनेकावयवाधारो वा ?। न प्राच्यः, चलाचलस्थूलास्थूलनीलानीलादिरूपाणामवयवानां विरोधप्रतीतेः । अथ द्वितीय., तर्हि नैकः स्थूलोऽवयवी स्यात्, विरुद्धधर्माध्यासात् । अपि च, असौ तेषु वर्तमानः सामस्त्येन, एकदेशेन वा वर्तेत ? । सामस्त्येन वृत्तौ, एकस्मिन्नेवावयवे परिसमाप्तत्वादनेकावयववृत्तित्व न स्यात् । एकदेशेन वृत्तौ, निरंशत्वं तस्योपगतं विरुध्येत । सांशत्वे वा तेऽप्यंशास्ततो भिन्ना , अभिन्ना वा भवेयु ? । भिन्नत्वे, पुनरप्यनेकांशवृत्तेरेकस्य सामस्त्यैकदेशविकल्पानतिक्रमादनवस्था । अभिन्नत्वे, न केचिदंशा स्यु । इति न तदुभयस्वभावार्थपक्षोऽपि संगतिशृङ्गसङ्गमगात् । अनुभयस्वभावभेदोऽप्युपेक्षाक्षेत्रं प्रेक्षाणाम्, परमाणु-

स्थूलयोः परस्परप्रतिषेधात्मकत्वेनाऽन्यतरप्रतिषेधे तदितरविधेरवश्यं-भावात्। इति नार्थः कश्चिद् विचारचूलामालम्बते॥ तदभावे तद्ग्राह्-कतया संमतं ज्ञानमपि तथैव । किञ्च, एतदर्थसमकालम्, तद्भिन्न-काल वा तद्ग्राहकं कल्प्येत ?। प्राक्कल्पनायाम्, त्रिलोकीतल्पोपगता-अपि पदार्थास्तत्र प्रथेरन्, समकालत्वाविशेषात् । तदन्यप्रकारे तु, निराकारम्, साकारं वा तत् स्यात् ? । प्रथमे, प्रतिनियतपदार्थपरि-च्छेदानुपपत्ति. । द्वितीये तु, किमयमाकारो व्यतिरिक्त, अव्यतिरिक्तो वा ज्ञानात् ? । अव्यतिरेके, न कश्चिदाकारो नाम, तथाच निराका-रप्रकारप्रकाशित. परीहार । व्यतिरेके, चिद्रूप., अचिद्रूपो वाऽयं भवेत् ? । चिद्रूपश्चेत् । तदानीमाकारोऽपि वेदक· स्यात्, तथा चायमपि निराकारः, साकारो वा तद्वेदको भवेत् ? इत्यावर्तने-नाऽनवस्था । अथाचिद्रूप, किमज्ञात., ज्ञातो वा तज्ज्ञापकः स्यात्?। प्राचीने, चैत्रस्येव मैत्रस्याऽप्यसौ तज्ज्ञापक स्यात् । तदुत्तरे तु, निराकारेण, साकारेण वा ज्ञानेन तस्यापि ज्ञानं स्यात् ? इत्याद्यावृ-त्तावनवस्थैव । इति न ज्ञानमपि किञ्चिच्चतुरचेतोगोचरे संचरति । ततः सर्वशून्यतैव परं तत्त्वमवास्थित । इति सर्वापलापिविकल्प-संक्षेपः ॥

तदेतदखिलमनल्पपलालपूलकूटकल्पमप्रतिमोत्तरकृशानुकणमात्रसा-ध्यम्, तथाहि--इदं प्रमाणमूलमालप्येत, अन्यथा वा ?। अन्यथा चेत् । उत्तिष्ठोत्तिष्ठ तर्हि कथमकृथा प्रामाणिकपर्षदीह प्रवेशम् ? । प्रमाणमूल चेत् । तत् प्रमाणमर्थरूपम्, ज्ञानरूपं वा भवेत् ? इत्यादि-स्वमार्गणैरेव मर्माविद्भिर्विद्ध कथमुच्छ्वसितुमपि शक्नोषि ? । कथं च प्रमाणाभ्युपगमे शून्यसिद्धि ?। शून्यरूपमेव प्रमाणमिति चेत् । तर्हि शून्यतासिद्धिरपि शून्यैव, इति न शून्यसिद्धिः स्यात् । अभ्य-धिष्महि च--

"शून्ये मानमुपैति चेद् ननु तदा शून्यात्मता दु स्थिता
नो चेत् तर्हि तथापि किं न सुतरां शून्यात्मता दु स्थिता ? ।

वन्ध्या मे जननीत्यमुष्य सदृशीमप्याश्रयन् शून्यतां
शङ्के तु शकसाहसैकरसिकः स्वामिन् ! असौ सौगतः" ॥१॥

अथेत्थमेव विचारयता यदा न किञ्चित् संगतिं गाते, तदा शून्यमेव तत्त्वमवतिष्ठत इति चेत् । तदेतत् प्रबलशृङ्खलस्खलितांह्रेरुत्प्लवनप्रागल्भ्याभ्यसनम्, यतः–

"विचारो वस्तुरूपश्चेत् किं सिध्येत् सर्वशून्यता ? ।
विचारोऽवस्तुरूपश्चेत् किं सिध्येत् सर्वशून्यता ? " ॥ १ ॥

न च तवाऽमून्यर्थज्ञानदूषणान्यपि सूपपादानि, यस्मादुभयस्वभाव एवार्थ इति नः पक्षः । न चाणुभ्यः स्थूलोत्पादः सर्वत्र स्वीक्रियते, यतस्तत्कार्यकारणभावमात्रवित्रासनेनाऽर्थकथा विश्राम्येत्, स्थूलादपि सूत्रपटलादेः स्थूलस्य पटादेः प्रादुर्भावविभावनात्, आत्माऽऽकाशादेरपुद्गलकार्यत्वकक्षीकाराच्च । यत्र पुनरणुभ्यस्तदुत्पत्तिः, तत्र तत्तत्कालादिसामग्रीसव्यपेक्षक्रियावशात् प्रादुर्भूतं कथञ्चित्पृथग्भूतं संयोगातिशयमपेक्ष्येयमविरुद्धैव । केवलं कथञ्चिदिति किञ्चन त्वच्चेतस्तुदति, तत्रेयं प्रतिक्रिया–एकेनैव हि रूपेण भेदाभेदयोरभिधाने विरोधनिरोधः स्यात्, न चैवमिह, पर्यायरूपतया भेदस्य द्रव्यरूपतया चाऽभेदस्य भणनात् । त्वयाऽपि च "प्रमाणप्रमेयतत्त्वं नास्त्येव" इत्येकमेव वचनं स्वपरपक्षावपेक्ष्य साधकं बाधकं वा कक्षीकृतमेव । याऽपि परमाणोः षडंशताऽऽपत्तिरुक्ता, साऽप्ययुक्ता, यतोऽत्रांशशब्दस्य सबन्धनिबन्धनं शक्तिस्वरूपोऽर्थो विवक्ष्येत, अवयवलक्षणो वा ? । न प्राच्ये प्रसङ्गः संगतः, तथाऽस्माभिस्तदभ्युपगमात् । द्वितीये तु, नास्त्यविनाभावः, तत्तच्छक्तिमात्रेणैव तत्तत्परमाणुसंबन्धस्य प्रतिषेद्धुमशक्यत्वात् । यदपि निराधार इत्यादि न्यगादि, तत्रापि कथञ्चिद्विरोध्यविरोध्यनेकावयवाविष्वग्भूतवृत्तिरवयव्यभिधीयते, तत्र च यद् विरोध्यनेकावयवाधारताया विरुद्धधर्माध्यासनमभ्यधायि, तत्कथञ्चिदुपेयत एव तावत्, अवयवात्मकस्य तस्यापि कथञ्चिदनेकरूपत्वात् । यच्चोपन्यस्तम्–सामस्त्येनैकदेशेन वेत्यादि, तत्रापि विकल्पद्वया-

नभ्युपगम एवोत्तरम्, अविष्वग्भावेनावयविनोऽवयवेषु वृत्ते: स्वीकारात्। यच्चार्थसमकालमित्याद्युक्तम्, तत्रापि विकल्पद्वयमपि स्वीक्रियत एव, अस्मदादिप्रत्यक्षं हि योग्यसमकालार्थाऽऽकलनकुशलम्, स्मरणमतीतस्य, शाब्दानुमाने त्रैकालिकस्याऽप्यर्थस्य परिच्छेदके। निराकारं चैतद् द्वयमपि, न चातिप्रसङ्गः। तद्ग्रहणपरिणामश्चेदाकारः, तदभ्युपगच्छामः, स्वज्ञानावरणवीर्यान्तरायक्षयोपशमविशेषवशादेवाऽस्य नैयत्येन प्रवृत्तेः। शेषविकल्पनिकुरुम्बडम्बरेऽस्वीकार एव तिरस्कारः।

"निरस्ता शून्यता सेयमाशा शाक्य! वसन्त्यमू।
उन्मीलय चिराद् नेत्रे कौतुकालोकनोत्सुके" ॥ १ ॥

अथ ब्रह्मवादिवावदूका वदन्ति—युक्तं यदेष सकलापलापी पापीयानपासे, आत्मब्रह्मणस्तात्त्विकस्य सत्त्वात्। न च सरलसालरसालप्रियालहिन्तालतालतमालप्रवालप्रमुखपदार्थसार्थोऽप्यहमहमिकया प्रतीयमानः कथं न पारमार्थिकः स्यात्? इति वक्तव्यम्, तस्य मिथ्यारूपत्वात्। तथाहि— प्रपञ्चो मिथ्या, प्रतीयमानत्वात्, यदेवं तदेवं यथा शुक्तिशकले कलधौतम्, तथा चायम्, तस्मात्तथा ॥

तदेतदेतस्य न तर्कवितर्ककार्कश्यं सूचयति, तथाहि—मिथ्यात्वमत्र कीदृक्षमाकाङ्क्षितं सूक्ष्मदृशा—किमत्यन्तासत्त्वम्, उताऽन्यस्यान्याकारतया प्रतीतत्वम्, आहोस्विदनिर्वाच्यत्वम्?, इति भेदत्रयी त्रिनेत्रनेत्रत्रयीव त्रौकते। प्राचि पक्षद्वये, त्वदनङ्गीकार परीहारः। तार्तीयिकविकल्पे तु, किमिदमनिर्वाच्यत्वं नाम?; किं निरुक्तिविरह एव, निरुक्तिनिमित्तविरहः, निःस्वभावत्वं वा?। न प्रथमः कल्पः कल्पनार्हः, सरलोऽयं सालोऽयमिति निश्चितोक्तेरनुभवात्। नापि द्वितीयः, निरुक्तेर्हि निमित्तं ज्ञानं वा स्यात्, विषयो वा?। न प्रथमस्य विरहः, सरलसालादिसंवेदनस्य प्रतिप्राणि प्रतीतेः। नापि द्वितीयस्य, यतो विषयः किं भावरूपो नास्ति, अभावरूपो वा?। प्रथमकल्पनायाम्, असत्ख्यात्यभ्युपगमप्रसङ्गः। द्वितीयकल्पनाया तु, सत्ख्यातिरेव।

उभावपि न स्त इति चेत् । ननु भावाभावशब्दाभ्यां लोकप्रतीतिसिद्धौ तावभिप्रेतौ, विपरीतौ वा ? । प्रथमपक्षे तावद्, यथोभयोरेकत्र विधिर्नास्ति, तथा प्रतिषेधोऽपि, परस्परविरुद्धधर्मयोर्मध्यादेकतराविधिनिषेधयोरन्यतरनिषेधविधिनान्तरीयकत्वात् । द्वितीयपक्षे तु, न काचित् क्षति, नह्यलौकिकविषयसहस्रनिवृत्तावपि लौकिकज्ञानविषयनिवृत्ति, तन्निरुक्तिनिवृत्तिर्वा । नि स्वभावत्वपक्षेऽपि, निसः प्रतिषेधार्थत्वे स्वभावशब्दस्याऽपि भावाभावयोरन्यतरार्थत्वे पूर्ववत् प्रसङ्ग । प्रतीत्यगोचरत्व नि स्वभावत्वमिति चेद् । अत्र विरोध – प्रपञ्चो न प्रतीयते चेत्, कथं धर्मितया, प्रतीयमानत्वं च हेतुतयोपाददे ?, तथोपादाने वा कथ न प्रतीयते ? । यथा प्रतीयते न तथेति चेत् । तर्हि विपरीतख्यातेरभ्युपगम[1] स्यात् । किञ्च, इयमनिर्वाच्यता प्रपञ्चस्य प्रत्यक्षेण प्रत्यक्षेपि[2]–सरलोऽयमित्याद्याकार हि प्रत्यक्ष प्रपञ्चस्य सत्यतामेव व्यवस्यति, सरलादिप्रतिनियतपदार्थपरिच्छेदात्मनस्तस्योत्पादात्, इतरेतरविविक्तवस्तूनामेव च प्रपञ्चवचोवाच्यत्वेन संमतत्वात् । अथ कथमेतत्प्रत्यक्षं पक्षप्रतिक्षेपकम् ?, तद्धि विधायकमेव, इति तथा तथा ब्रह्मैव विदधाति; न पुन प्रपञ्चसत्यतां प्ररूपयति, सा हि तदा प्ररूपिता स्याद्, यदीतरस्मिन्नितरेषां प्रतिषेध कृत स्यात्, न चैवम्, निषेधे कुण्ठत्वात् प्रत्यक्षस्येति चेत् । तदयुक्तम्, यतो विधायकमिति कोऽर्थ ?, इदमिति वस्तुस्वरूपं गृह्णाति, नान्यस्वरूपं प्रतिषेधति प्रत्यक्षमिति चेद् । नैवम्, अन्यरूपनिषेधमन्तरेण तत्स्वरूपपरिच्छेदस्याप्यसंपत्ते –पीतादिव्यवच्छिन्नं हि नीलं नीलमिति गृहीतं भवति, नेतरथा । यदेदमिति वस्तुस्वरूपमेव गृह्णाति प्रत्यक्षमित्युच्यते, तदाऽवश्यमपरस्य प्रतिषेधमपि तन् प्रतिपद्यत इत्यभिहितमेव भवति, केवलवस्तुस्वरूपप्रतिपत्तेरेवान्यप्रतिषेधप्रतिपत्तिरूपत्वात् । अपि च, विधायकमेव प्रत्यक्षमिति नियमस्याऽङ्गीकारे विद्यावदविद्याया अपि विधान तवाऽनुषज्यते । सोऽयमविद्याविवेकेन सन्मात्र प्रत्यक्षात्

१ विपरीतख्यातिरियमभ्युपगता स्यादित्यपि पाठान्तरम् । २ प्रतिक्षिप्ता ।

प्रतियन्नेव न निषेधकं तादिति ब्रुवाण कथं स्वस्थ ? । इति सिद्धं प्रत्यक्षबाधित. पक्ष इति । अनुमानबाधितश्च–प्रपञ्चो मिथ्या न भवति, असद्विलक्षणत्वाद्, य एवं स एवं यथा आत्मा, तथा चाऽयम्, तस्मात्तथेति । प्रतीयमानत्व च हेतुर्ब्रह्मात्मना व्यभिचारी, स हि प्रतीयते, न च मिथ्या । अप्रतीयमानत्वे तु, अस्य तद्गोचरवचनानामप्रवृत्तेर्मूकतैव तत्र व श्रायसी स्यात् । दृष्टान्तश्च साध्यविकल', शुक्तिशकलकलधौतेऽपि प्रपञ्चाऽन्तर्गतत्वेनाऽनिर्वचनीयताया साध्यमानत्वात् । किञ्च, इदमनुमान प्रपञ्चाद् भिन्नम्, अभिन्नं वा ? । यदि भिन्नम्, तर्हि सत्यम्, असत्य वा ? । यदि सत्यम्, तर्हि तद्वदेव प्रपञ्चस्यापि सत्यत्व स्यात् । अथाऽसत्यम्, तत्रापि शून्यम्, अन्यथाख्यातम्, अनिर्वचनीय वा ? । आद्यपक्षद्वयेऽपि न साध्यसाधकत्वम्, नृश्रृङ्गवच्छुक्तिकलधौतवच्च । तृतीयपक्षोऽप्यक्षम, अनिर्वचनीयस्याऽसंभावित्वेनाभिहितत्वात् । व्यवहारसत्यमिदमनुमानम्, अतोऽसत्यत्वाभावात् स्वसाध्यसाधकमिति चेत् । किमिद व्यवहारसत्य नाम ?, व्यवहृतिर्व्यवहारो ज्ञानं तेन चेत् सत्यम्, तर्हि पारमार्थिकमेव तत्, तत्र चोक्तो दोष । अथ व्यवहार शब्दस्तेन सत्यम् । ननु शब्दोऽपि सत्यस्वरूप, तदितरो वा ? । यद्याद्य', तर्हि तेन यत्सत्यं तत्पारमार्थिकमेवेति तदेव दूषणम् । अथाऽसत्यस्वरूप शब्द., कथं ततस्तस्य सत्यत्वं नाम ?, न हि स्वयमसत्यमन्यस्य सत्यत्वव्यवस्थाहेतु, अतिप्रसङ्गात् । अथ कूटकार्षापणे सत्यकार्षापणोचितक्रयविक्रयव्यवहारजनकत्वेन सत्यकार्षापणव्यवहारवदसत्येऽप्यनुमाने सत्यव्यवहार इति चेत् । तर्ह्यसत्यमेव तदनुमानम्, तत्र चोक्तो दोष । अतो न प्रपञ्चाद्भिन्नमनुमानमुपपत्तिपदवीमापेदानम् । नाप्यभिन्नम्, प्रपञ्चस्वभावतया तस्यापि मिथ्यात्वप्रसक्ते, मिथ्यारूप च तत्कथ नाम स्वसाध्य साधयेत् ?, इत्युक्तमेव । एव च प्रपञ्चस्य मिथ्यात्वासिद्धे कथं परमब्रह्मणस्तात्त्विकत्वं स्यात् ?, यतो बाह्याऽर्थाभावो भवेदिति ॥१५॥

१ स्वीकुर्वन् । २ श्रेयसे इत्यपि पाठ ।

प्रमाणत्वाभिमतज्ञानस्य स्वव्यवसायीति विशेषणं व्याख्यान्ति—

**स्वस्य व्यवसायः स्वाभिमुख्येन प्रकाशनम्, बाह्यस्येवं तदाभिमुख्येन, करिकलभकमहमात्मना जानामि ॥१६॥**

यथा बाह्याभिमुख्येन बाह्यानुभवनेन प्रकाशनं बाह्यव्यवसायो ज्ञानस्य, तथा स्वाभिमुख्येन प्रकाशनं स्वव्यवसाय.। अत्रोल्लेख.—करिकलभकमित्यादि । यथा करिकलभकमिति प्रमेयस्य अहमिति प्रमातु, जानामीति प्रमिते प्रतिभास, तथाऽऽत्मनेति प्रमाणत्वाभिमतज्ञानस्याऽप्यस्त्येवेति भाव. ॥ १६ ॥

स्वव्यवसायमेव स्पष्टदृष्टान्तप्रकटनेन निष्टङ्कयन्ति—

**कः खलु ज्ञानस्याऽऽलम्बनं बाह्यं प्रतिभातमभिमन्यमानस्तदपि तत्प्रकारं नाभिमन्येत ?, मिहिरालोकवत् ॥ ॥१७॥**

तदपीति ज्ञानमपि, तत्प्रकारमिति स प्रतिभातत्वलक्षण· प्रकारः प्रतिनियत स्वरूप यस्य तत् तत्प्रकारं प्रतिभातमित्यर्थ । यथैव हि गिरिनगरगहनादिक मिहिरालोकस्य विषयं प्रतिभातमभिमन्यमानै-र्मिहिरालोकोऽपि प्रतिभातोऽभिमन्यते लौकिकपरीक्षकै, तद्वज्ज्ञानस्य विषय कुम्भादिकं प्रतिभातमभिमन्यमानैस्तैर्ज्ञानमपि प्रतिभात स्वीकर्तव्यमिति ॥

अत्रेयं भट्टचट्टघट्टना—ननु न स्वसंवेदनं वेदनस्य सुन्दरम्, स्वात्मनि क्रियाविरोधात्, इत्यस्य पारोक्ष्यमेवाक्षूण कक्षीकरणीयम् । तदेतदरमणीयम्, यत –किमुत्पत्ति, ज्ञप्तिर्वा स्वात्मनि विरुध्येत ? । यद्युत्पत्ति, सा विरुध्यताम्, न हि ज्ञानमात्मानमुत्पादयतीति वयमध्यगीष्महि । अथ ज्ञप्ति, नेयमात्मनि विरोधमदीधरत्, तदात्मनेव ज्ञानस्य स्वकारणकलापादुत्पादात्, प्रकाशात्मनेव प्रदीपकलिकालोकस्य । अथ प्रकाशात्मनैव प्रदीपालोकोऽयमुदयमा-

शिवानिति परप्रकाशकोऽस्तु, आत्मानमप्येतावन्मात्रेणैव प्रकाशयतीति तु कौतस्कुती नीति ? इति चेत् । तत्कि तेनाऽप्रकाशितेनैव वराकेण स्थातव्यम्, आलोकान्तराद् वा प्रकाशेनाऽस्य भवितव्यम्?। प्रथमे, प्रत्यक्षबाधा । द्वितीयेऽपि, सैवाऽनवस्थापत्तिश्च । अथ नाऽसौ स्वमपेक्ष्य कर्मतया चकास्ति, इत्यस्वप्रकाशक स्वीक्रियते, प्रकाशरूपतया तूत्पन्नत्वात् स्वयं प्रकाशत एवेति चेत् । अनेनैव सुधामद्धि, न हि वयमपि ज्ञानं कर्मतयैव प्रतिभासमानं स्ववेद्यमावेदयामहि, ज्ञान स्वयं प्रतिभासत इत्यादावकर्मकस्य तस्य चकासनात् । यथा तु ज्ञानं जानामीति कर्मतयाऽपि तद् भाति, यथा प्रदीप स्वं प्रकाशयतीत्ययमपि तथा प्रथत एव । अथावयवैरालोकावयवी प्रकाश्यत-इत्यस्वप्रकाशक एवायमिति चेत् । ननु तेऽपि केन प्रकाशनीया. ? । अवयविनेति चेत् । नन्वमीषां परस्परगोचरज्ञानजनने सहकारित्वमेव तावत्प्रकाशकत्वमुच्यते । तच्चामीषामज्ञातानाम्, ज्ञातानां वा स्यात् ? । नाज्ञातानाम्, एवं ह्यनालोकित एव प्रदीपकुड्मलाऽऽलोकोऽपि कदाचित् कलशकुलिशादीञ्ज्ञापयेत् । ज्ञाताना चेत् । इतरेतराश्रयापत्ति.–ज्ञाता खल्ववयवा अवयविनं ज्ञापयेयु , सोऽपि च ज्ञात-एव तान् ज्ञापयेदिति । अथ तेषामप्यवयवानामवयवित्वाद् निजावयवैर्ज्ञप्ति. करिष्यते, तदानीमनवस्था । अथ पर्यन्ते केचिदवयवा स्वयमेवात्मानं ज्ञापयेयु , तर्हि ज्ञानमपि स्वयमेवात्मानं निश्चिनोतीति किं न कक्षीकुरुषे ? । कथं च पारोक्ष्ये ज्ञानस्य ज्ञानं स्यात् ? । अन्यथाऽनुपपद्यमानार्थप्राकट्यरूपार्थसमुत्थापितार्थापत्तेरिति चेत् । ननु तदर्थप्राकट्यमात्मधर्म , ज्ञानधर्म , अर्थधर्मो वा भवेत् ? । नाद्य. प्रकार , प्रभाकरकक्षापञ्जरप्रवेशप्रसङ्गात् । न द्वैतीयीक , ज्ञानस्य क्षणिकत्वेन तत्क्षण एव क्षीणत्वादुपरितनक्षणोत्पदिष्णोस्तस्य तद्धर्मत्वविरोधात् । नाऽपि तार्तीयीक., तथात्वे हि चैत्रस्येव मैत्रस्यापि स पदार्थ' प्रकट. स्यात् । अथ यस्यैव ज्ञानेन जनयाम्बभूवेऽसौ, तस्यैव तत्प्रकटनम्, तद् दुर्घटम्, घटस्य प्रतिनियतप्रमातृप्रबो-

धितप्रदीपाङ्कुरप्रकटितस्याऽप्यनियतैर्दर्शनात् तन्नियमानुपपत्ते. । अस्तु वैतत्, तथाप्ययमर्थधर्मो जड , चिद्रूपो वा भवेत् ? । यदि जड:, कथमर्थदर्शन स्यात् ?, अर्थदर्शनं ह्यर्थदृष्टिरर्थज्ञप्तिरुच्यते, जडत्वे तु प्राकट्यस्य कथमिद घटेत ? । ज्ञानप्रमाणशब्दयोश्चैवं सामानाधिकरण्यमसूपपादम्; यतो ज्ञायते ज्ञप्तिर्जन्यते येन तत् ज्ञानमाम्नायते, प्राकट्यस्य च जडत्वेनाऽज्ञप्तिरूपत्वे कथं तज्जनक प्रमाणं ज्ञानं व्यपदिश्येत ?। चिद्रूपश्चेत् । स्वसंवेद्य , वेदनान्तरवेद्यो वा ? । यदि स्वसंवेद्य , तर्हि "कृतश्च शीलविध्वसो न चाऽनङ्ग. शमं गत." इति न्याय. समायात —स्वात्मनि क्रियाविरोधाद् विज्ञाने स्वसंवित्तिप्रतिक्षेपपातक कृत्वाऽपि प्राकट्ये तस्या. स्वय स्वीकारात् । वेदनान्तरवेद्यत्व पुनरस्य कुतस्त्यम् ?, तथाहि–किमय यावदर्थम्, यावदक्षव्यापारं वाऽवतिष्ठेत ?, ज्ञानवत्क्षणिको वा भवेत् ? । नाद्य पक्ष , पदार्थमालोक्य निमीलितलोचनोत्पलयुगलस्य प्रकटतत्प्रतीतिप्रसक्ते । न द्वितीय., अक्षादिव्यापारस्य ज्ञानोत्पत्तिमात्रे व्यापारात् प्राकट्यस्य तदपेक्षानुपपत्ते । नापि तृतीय , क्षणजातनष्टस्य वेदनान्तरेण वेदितुमशक्यत्वात्; वेदने तु द्वित्रिक्षणावस्थितिप्रसक्ते. । तन्न तद् वेदनमवदातम्, यतोऽर्थापत्तिरुल्लसेदिति ॥

अथ यौगा संगिरन्ते–अहो ! आर्हता. ! नाऽस्मिन् मीमासके वराके व्यपाकृतेऽपि सवेदने स्वसवेदनदोहद पूरयितुं पार्यते। तथाहि–ज्ञानं स्वान्यप्रकाश्यम्, ईश्वरज्ञानान्यत्वे सति प्रमेयत्वाद्, यदेवं तदेवं, यथा घट , तथा चेदम्, तस्मात् तथा । समुत्पन्न हि ज्ञानमेकात्मसमवेतानन्तरसमयसमुत्पदिष्णुमानसप्रत्यक्षेणैव लक्ष्यते, न पुन. स्वेन। न चैवमनस्थावल्लेरुल्लास , अर्थावसायिवेदनोत्पादमात्रेणैवाऽर्थसिद्धे., तद्धि पदार्थपरामर्शस्वभावमेव, इत्युत्पन्नमात्रमेव पदार्थप्रथामनोरथरथस्थितं कृतार्थयति प्रमातारम् । अर्थज्ञानजिज्ञासायां तु तत्रापि ज्ञानमुत्पद्यत एवेति ॥

तदेतदेतेषा मतेस्तरलतां तनोति, प्रकटितप्रयोगे पक्षस्यानुमानेन

मानखण्डनात्, तथा च तावकाऽऽकूतेन तत्र हेतो: कालात्ययापदि-ष्टत्वनिष्टङ्कनाच्च। तथाहि--विवादास्पदं ज्ञानं स्वसंविदितम्, ज्ञान-त्वात्, ईश्वरज्ञानवत्। वाद्यसिद्धमेतन्निदर्शनम्, जैनैरीश्वरास्वीकारेण तज्ज्ञानस्य तेषामप्रसिद्धे:, इति चेत्। तदचतुरस्रम्, अनवद्यविद्या-विद्याधरीबन्धुरपरिष्वङ्गस्य पुरुषातिशेषविशेषस्य खण्डपरशो: स्वी-कारात्, त्रिविष्टपघटनलम्पटपटिम्न सकलावलोकनकौशलशालिन एव चास्य तिरस्कारात्। व्यर्थविशेष्यश्चात्र हेतु:, समर्थविशेषणोपादाने-नैव साध्यसिद्धे:, धूमध्वजसिद्धौ धूमवत्त्वे सति द्रव्यत्वादितिवत्। न हीश्वरज्ञानादन्यत् स्वसंविदितमप्रमेयं चास्ति, यदपोहाय प्रमेयत्वा-दिति क्रियते। अप्रयोजकश्चायं हेतु:, सोपाधिकत्वात्, साधनाऽव्या-पक: साध्येन समव्याप्तिक: खलूपाधिरभिधीयते, तत्पुत्रत्वादिना श्या-मत्वे साध्ये शाकाद्याहारपरिणामवत्। क: पुनरुपाधिरत्र सूक्ष्मेक्षणै-रीक्षाञ्चक्रे? इति चेत्। उच्यते, निबिडजाडिमन्! जडिमलक्षण:। त-थाहि--ईश्वरज्ञानान्यत्वे प्रमेयत्वे सत्यपि यदेव जडिमपात्रं पात्रादि तदेव स्वस्मादन्येनैव प्रकाश्यते। स्वप्रकाशे परमुखोत्प्रेक्षित्वं हि ज-डस्य लक्षणम्, न च ज्ञानं जडस्वरूपम्, इति सिद्धं साधनाव्यापकत्वं जाड्यस्य, साध्येन समव्याप्तिकत्वं चास्य स्पष्टमेव, जाड्यं विहाय स्वप्रकाशाभावस्य, तं च त्यक्त्वा जाड्यस्य क्वचिदप्यदर्शनादिति। य-च्चोक्तम्--समुत्पन्नं हि ज्ञानमेकात्मसमवेतेत्यादि। तदपि नावितथम्, इत्थमर्थज्ञानतज्ज्ञानयोरुत्पद्यमानयो: क्रमानुपलक्षणात्। आशूत्पादा-दत्र क्रमानुपलक्षणमुत्पलपत्रशतव्यतिभेदवदिति चेत्। तदचारु, जिज्ञा-साव्यवहितस्याऽर्थज्ञानज्ञानस्योत्पादप्रतिपादनात्। न च जिज्ञासासमु-त्पाद्यत्वं संवेदनानां संगच्छते, अजिज्ञासितेष्वपि योग्यदेशेषु गोचरेषु तदुत्पादप्रतीते:। न चायोग्यदेशमर्थज्ञानम्, आत्मसमवेतस्याऽस्य स-मुत्पादात्, इति जिज्ञासामन्तरेणैवार्थज्ञाने ज्ञानोत्पादप्रसङ्ग:। बा-ढमुत्पद्यतां नामेदम्, को दोष:? इति चेत्। नन्वेवमेव तज्ज्ञानज्ञाने-ऽप्यपरज्ञानोत्पादप्रसङ्ग:, तत्राऽपि चैवमेवायम्, इत्यपरापरज्ञानो-

त्पादपरम्परायामेवात्मनो व्यापाराद् न विषयान्तरसंचारः स्यात्; इति न ज्ञानस्य ज्ञानान्तरज्ञेयताऽपि युक्तिमार्गमवगाहते ॥ १७ ॥

प्रमाणं विविच्याऽस्यैव प्रामाण्यस्वरूपं धर्ममाविष्कुर्वन्ति–

## ज्ञानस्य प्रमेयाऽव्यभिचारित्वं प्रामाण्यम् ॥ १८ ॥

प्रमीयमाणार्थाऽव्यभिचरणशीलत्वं यज् ज्ञानस्य तत् प्रामाण्यमित्यर्थ. ॥ १८ ॥

प्रसङ्गायातमप्रामाण्यरूपमपि धर्मं प्रकटयन्ति–

## तदितरत्त्वप्रामाण्यम् ॥ १९ ॥

तस्मात् प्रमेयाव्यभिचारित्वात्, इतरत् प्रमेयव्यभिचारित्वम्, अप्रामाण्यं प्रत्येयम् । प्रमेयव्यभिचारित्वं च ज्ञानस्य स्वव्यतिरिक्तग्राह्यापेक्षयैव लक्षणीयम्, स्वस्मिन् व्यभिचारस्यासंभवात्, तेन सर्वं ज्ञानं स्वापेक्षया प्रमाणमेव, न प्रमाणाभासम्, बहिरर्थापेक्षया तु किञ्चित् प्रमाणम्, किञ्चित् प्रमाणाभासम् ॥ १९ ॥

अथोत्पत्तौ स्वनिश्चये च ज्ञानानां स्वत एव प्रामाण्यम्, अप्रामाण्यं तु परत एव यज् जैमिनीया जगु, तद् निराकुर्वन्ति–

## तदुभयमुत्पत्तौ परत एव, ज्ञप्तौ तु स्वतः परतश्च ॥ २० ॥

अत्र ल्यब्लोपे पञ्चमी, परं स्वं चापेक्ष्येत्यर्थ, ज्ञानस्य हि प्रामाण्यमप्रामाण्यं च द्वितयमपि ज्ञानकारणगतगुणदोषरूपं परमपेक्ष्योत्पद्यते । निश्चीयते त्वभ्यासदशायां स्वत, अनभ्यासदशायां तु परत इति । तत्र ज्ञानस्याऽभ्यासदशायां प्रमेयाऽव्यभिचारि, तदितरच्चास्मीति[1] प्रामाण्याप्रामाण्यनिश्चय संवादकबाधकज्ञानमनपेक्ष्य प्रादुर्भवन् स्वतो भवतीत्यभिधीयते, अनभ्यासदशायां तु तदपेक्ष्य जायमानोऽसौ परत इति ॥

अत्रैवं मीमांसका मीमांसामांसलतां दर्शयन्ति– स्वत एव

---

१ अस्तीति पाठान्तरम् ।

सर्वथा प्रमाणानां प्रामाण्यं प्रतीतिकोटिमाटीकते । तथाहि— तदुत्पत्तिप्रगुणा गुणाः प्रत्यक्षेण, अनुमानेन वा मीयेरन् ? । यदि प्रत्यक्षेण, तत् किमैन्द्रियेण, अतीन्द्रियेण वा ? । नैन्द्रियेण, अतीन्द्रियेन्द्रियाऽधिकरणत्वेन तेषां तद्ग्रहणाऽयोग्यत्वात् । नाप्यतीन्द्रियेण, तस्य चारुविचारगोचरचारिष्णुत्वाभावात् । अनुमानेन तान् निरणैष्महीति चेत् । कुतस्तत्र नियमनिर्णयः स्यात् ?, प्रत्यक्षाद् गुणेषु तत्प्रवृत्तेः परास्तत्वात् । तथा च—

"द्विष्ठसंबन्धसंवित्तिर्नैकरूपप्रवेदनात् ।
द्वयस्वरूपग्रहणे सति संबन्धवेदनम्" ॥ १ ॥

नाप्यनुमानात्, तत एव तन्निश्चितावितरेतराश्रयस्य, तदन्तरात् पुनरनवस्थाया प्रसक्तेः । ततो न गुणाः सन्ति केचित्, इति स्वरूपावस्थेभ्य एव कारणेभ्यो जायमानं तत् कथमुत्पत्तौ परतः स्यात् ? । निश्चयस्तु तस्य परतः कारणगुणज्ञानात्, बाधकाभावज्ञानात्, संवादिवेदनाद् वा स्यात् ? । तत्र प्राच्यं प्रकारं प्रागेव प्रास्थाम, गुणग्रहणप्रवीणप्रमाणपराकरणात् । द्वितीये तु, तात्कालिकस्य, कालान्तरभाविनो वा बाधकस्याऽभावज्ञानं तन्निश्चायकं स्यात् ? । पौरस्त्य तावत् कूटहाटकनिष्टङ्कनेऽपि स्पष्टमस्त्येव । द्वितीयं तु न चर्मचक्षुषां संभवति । संवादिवेदनं तु सहकारिरूप सत् तन्निश्चय विरचयेद्, ग्राहकं वा ? । नाद्यभिद्, भिन्नकालत्वेन तस्य सहकारित्वासंभवात् । द्वितीयपक्षे तु, तस्यैव ग्राहकं सत्, तद्विषयस्य, विषयान्तरस्य वा ? । न प्रथमः पक्षः, प्रवर्तकज्ञानस्य सुदूरनष्टत्वेन ग्राह्यत्वायोगात् । द्वितीये तु, एकसन्तानम्, भिन्नसन्तानं वा तत् स्यात् ? । पक्षद्वयेऽपि, तैमिरिकाऽऽलोक्यमानमृगाङ्कमण्डलद्वयदर्शिदर्शनेन व्यभिचारः, तद्धि चैत्रस्य पुनःपुनर्मैत्रस्य चोत्पद्यत एव । तृतीये पुनः, अर्थक्रियाज्ञानम्, अन्यद् वा तद् भवेत् ? । न पौरस्त्यम्, प्रवर्तकस्य प्रामाण्यानिश्चये प्रवृत्त्यभावेनार्थक्रियाया एवाभावात् । निश्चितप्रामाण्यात् तु प्रवर्तकज्ञानात् प्रवृत्तौ चक्रकम्— निश्चित-

प्रामाण्यात् प्रवर्तकात् प्रवृत्तिः, प्रवृत्तेरर्थक्रियाज्ञानम्, तस्माच्च प्रवर्तकज्ञानस्य प्रामाण्यनिश्चय इति । कथं चार्थक्रियाज्ञानस्याऽपि प्रामाण्यनिश्चयः ? । अन्यस्मादर्थक्रियाज्ञानाच्चेत् । अनवस्था । प्रवर्तकज्ञानाच्चेत् । अन्योन्याश्रय । स्वतश्चेत् । प्रवर्तकज्ञानस्यापि तथैवाऽस्तु । अन्यदपि विज्ञानमेकसन्तानम्, भिन्नसन्तानं वा ? । द्वयमपि चैतदेकजातीयम्, भिन्नजातीयं वा ? । चतुष्टयमपि चैतद् व्यभिचाराभिचारदुस्संचरम् । तथाहि— एकसन्तानं भिन्नसन्तानं चैकजातीयमपि तरलतरतुङ्गतङ्गत्तरङ्गतरङ्गिणीतोयज्ञानम्, भिन्नजातीयं च कुम्भाम्भोरुहादिज्ञानं मरुवसुन्धराचारिचतुरतरतरणिकिरणश्रेणिसाङ्गिसलिलसंवेदनस्य न संवादकमिति न ज्ञप्तावपि तत् परत । अप्रामाण्यं तूत्पत्तौ दोषापेक्षत्वात्, ज्ञप्तौ तु बाधकापेक्षत्वात् परत एवेति ॥

अत्राभिदध्महे— यत्तावद् गुणा प्रत्यक्षेणाऽनुमानेन वा मीयेरन्नित्यादि न्यगादि । तदखिलं न खलु न दोषप्रसरेऽपि प्रेरयितुं पार्यते । अथाध्यक्षेणैव चक्षुरादिस्थान् दोषान् निश्चिक्यिरे लोकाः । किं न नैर्मल्यादीन् गुणानपि ? । अथ तिमिरादिदोषाभावमात्रमेव नैर्मल्यादि, न तु गुणरूपमिति कथमध्यक्षेण गुणनिश्चयः स्यात् ? । एवं तर्हि नैर्मल्यादिगुणाभावमात्रमेव तिमिरादि, न तु दोषरूपमिति विपर्ययकल्पना किं न स्यात् ? । अस्तु वा दोषाभावमात्रमेव गुणः, तथापि नायं तुच्छः कश्चित् संगच्छते,

"भावान्तरविनिर्मुक्तो भावोऽत्रानुपलम्भवत् ।
अभावः संमतस्तस्य हेतोः किं न समुद्भवः ?" ॥ १ ॥

इति स्वयं भट्टेन प्रकटनात् । तदपेक्षायामपि च कथं न परतः प्रामाण्योत्पत्तिः ? । अथाऽऽसतां नैर्मल्यादयो गुणाः, तथाप्यधिष्ठानप्रतिष्ठानेव तान् प्रत्यक्षं साक्षात्करोति, न करणस्थान्, तेषां परोक्षत्वात् । तर्हि तत एव दोषानपि तत्स्थानेव तत्साक्षात् कुर्यात्, इति कथं दोषा अपि प्रत्यक्षलक्ष्याः स्युः ? । अथाप्रामाण्यं विज्ञानमात्रोत्पादककारणकला-

---

१ " धारि " इति पाठान्तरम् ।

पातिरिक्तकारकोत्पाद्यम्, विज्ञानमात्रानुवृत्तावपि व्यावर्तमानत्वात्, यदनुवृत्तावपि यद् व्यावर्तते तत्तन्मात्रोत्पादककारणकलापातिरिक्तकारकोत्पाद्यम्, यथा पाथ पृथिवीपवनातपानुवृत्तावपि व्यावर्तमानः कोद्रवाङ्कुरस्तदतिरिक्तकोद्रवोत्पाद्य', इत्यनुमानाद् दोषप्रसिद्धिरिति चेत्। चिरं नन्दताद् भवान्, इदमेव ह्यनुमानमप्रामाण्यपदं निरस्य प्रामाण्यपदं च प्रक्षिप्य गुणसिद्धावपि विदध्यात्, इति कथ न दोषवद् गुणा अपि सिद्धयेयु ? यतो नोत्पत्तौ परतः प्रामाण्य स्यात्। प्रतिबन्धश्च यथा दोषानुमाने तथा गुणानुमानेऽपि निर्णेय. । कथ वाऽऽदित्यगत्यनुमाने तन्निर्णयः ?। दृष्टान्ते तु यथाऽत्र साध्यसाधनसंबन्धोद्बोधोऽस्ति, तथा गुणानुमानेऽपि। यच्चाऽवाचि– निश्चयस्तु तस्य परत इत्यादि। तत्र सवादिवेदनादिति ब्रूम । कारणगुणज्ञानबाधकाभावज्ञानयोरपि च संवादकज्ञानरूपत्वं प्रतिपद्यामहे—यादृशोऽर्थः पूर्वज्ञाने प्रथापथमवतीर्णस्तादृश एवासौ येन विज्ञानेन व्यवस्थाप्यते तत् संवादकमित्येतावन्मात्र हि तल्लक्षणमाचचक्षिरे धीरा.। यस्तु गुणग्रहणप्रवणप्रमाणपराकरणपरायणातिदेशप्रयास, प्रयास एव केवलमयमजनि भवत, दोषसंदोहवद् गुणगणेऽपि प्रमाणप्रवृत्तेरनिवारणात्। यत्तु बाधकाभावज्ञानपक्षे विकल्पितम्–तात्कालिकस्य कालान्तरभाविनो वेत्यादि। तत्राद्यविकल्पपरिकल्पनाऽल्पीयसी, न खलु साधननिर्भासिसंवेदनोदयकाले क्वापि कस्यापि बाधकस्योदय. संभवी, उपयोगयौगपद्यासंभवात्, भविष्यत्कालस्य तु बाधकस्याभावज्ञानात् प्रामाण्यनिर्णयो निरवद्य एव। न च चर्मचक्षुषां तदभावो भवितुमर्हति, यदुदग्रसमग्रसामग्रीसंपाद्यसंवेदनं न तत्र भाविबाधकावकाश इत्येव तन्निर्णयात्। यदि च भाविवस्तुसंवेदनमस्मादृशां न स्यादेव, तदा कथ कृत्तिकोदयात् शकटोदयानुमान नास्तमियात् ?। यत्पुनरवादि– संवादिवेदन त्वित्यादि। तत्र संवादिवेदनात् साधननिर्भासिप्रतिभासविषयस्य, विषयान्तरस्य वा ग्राह-

१ यदित्थं तादित्थ यथेत्येव पुस्तकान्तरे पाठ.।

कात् प्रामाण्यनिर्णय इति ब्रूमः । भवति हि तिमिरनिकुरम्बकर-म्बितालोकसहकारिकुम्भावभासस्य तत्रैवैकसन्तानं भिन्नसन्तानं च निरन्तरालोकसहकारिसामर्थ्यसमुद्भूतं संवेदन संवादकम् । न च तैमिरिकादिवेदनेऽपि तत्प्रसङ्ग॰, तत्र परतो बाधकात् । स्वत. सिद्ध-प्रामाण्यादुत्तरस्याऽप्रामाण्यनिर्णयाद् विषयान्तरग्राहकमपि संवाद-कमेव, यथाऽर्थक्रियाज्ञानम् । न चात्र चक्रकावकाशः, प्रवर्तकप्रमा-णप्रामाण्यनिर्णयादिप्रयोजनाया प्रथमप्रवृत्तेः संशयादपि भावात् । अर्थक्रियाज्ञानस्य तु स्वत एव प्रामाण्यनिश्चय., अभ्यासदशापन्न-त्वेन दृढतरस्यैवास्योत्पादात् । न च साधननिर्भासिनोऽपि तथैवा-ऽयमस्त्विति वाच्यम्, तस्य तद्विलक्षणत्वात् । अन्यदप्येकसन्तान भिन्नसन्तान चैकजातीय च यथैकदस्रदर्शनं दस्रान्तरदर्शनस्य, भिन्नजातीयं च यथा निशीथे तथाविधरसास्वादनं तथाभूतरू-पस्य संवादक भवत्येव । न च मिथ्यापाथ प्रथाया पाथोऽन्तरे कुम्भादौ वा संवेदनं संवादकं प्रसज्यते, यतो न खलु निखिलं प्रागुक्त सवेदनं सवादक सगिरामहे, किं तर्हि?, यत्र पूर्वोत्तरत्र ज्ञान-गोचरयोरव्यभिचारस्तत्रैव । किञ्च, स्वत एव प्रामाण्यनिर्णयवर्णनस-कर्णेनाऽनेन स्वशब्द आत्मार्थ , आत्मीयार्थो वा कथ्येत ? । नाद्यः पक्ष॰, स्वावबोधविधानेऽप्यन्धया बुद्धया स्वधर्मस्य प्रामाण्यस्य निर्णे-तुमशक्ते । द्वितीये तु, प्रकटकपटनाटकघटनपाटवं प्राचीकटत्, प्र-कारान्तरेणाऽस्मन्मताश्रयणात्– अस्माभिरप्यात्मीयेनैव ग्राहकेण प्रा-माण्यनिर्णयस्य स्वीकृतत्वात् । अथ येनैव ज्ञानमात्रं निर्णीयते तेनैव तत्प्रामाण्यमपि, इति स्वत प्रामाण्यनिर्णयो वर्ण्यते । नन्वर्थप्राकट्यो-त्थापितार्थापत्ते सकाशात् त्वया ज्ञाननिर्णीतिस्तावदभीप्सामासे । अर्थ-प्राकट्यं च यथार्थत्वविशेषणविशिष्टम्, निर्विशेषण वाऽर्थापत्तिमुत्था-पयेत् ?। प्राचि पक्षे, तस्य तद्विशेषणग्रहणं प्रथमप्रमाणात्, अन्य-स्मात्, स्वतो वा भवेत् ?। प्रथमपक्षे, परस्पराश्रयप्रसङ्ग – निश्चितप्रा-माण्याद्धि प्रथमप्रमाणाद् यथार्थत्वविशिष्टार्थप्राकट्यग्रहणम्, तस्मा-

च्च प्रथमप्रमाणे प्रामाण्यनिर्णय इति। द्वितीयविकल्पे तु, अनवस्था–अन्यस्मिन्नपि हि प्रमाणे प्रामाण्यनिर्णायकार्थापत्त्युत्थापकस्यार्थप्राकट्यस्य यथार्थत्वविशेषणग्रहणमन्यस्मात्प्रमाणादिति। अथ स्वतस्तद्विशेषणग्रहणम्, तथाहि–स्वसंविदितमर्थप्राकट्यं तच्चात्मानं निर्णयमानं स्वधर्मभूतं यथार्थत्वमपि निर्णयते, तथा च ततोऽनुमीयमाने ज्ञाने स्वतः प्रामाण्यज्ञप्तिरिति। तदेतदनवदातम्, एवं सत्यप्रामाण्यस्यापि स्वतो ज्ञप्तिप्रसक्ते। स्वतो निश्चितवैतथ्यविशेषणादर्थप्राकट्याद् विज्ञानमनुमीयमानमास्कन्दिताप्रामाण्यमेवानुमीयते। ततः कथं प्रामाण्यवदप्रामाण्यस्यापि स्वतो निर्णीतिर्न स्यात्[1]। अथ तत्र बाधकादेवाऽप्रामाण्यनिर्णयो न पुनर्ज्ञाननिर्णायकात्, एवं तर्हि संवादकादेव प्रामाण्यस्यापि निर्णयोऽस्तु, इति तदपि कथं स्वतो निर्णीत स्यात्[1]। निर्विशेषणं चेत् तदर्थप्राकट्यमर्थापत्त्युत्थापकम्, तर्ह्यप्रमाणेऽपि प्रामाण्यनिर्णायकार्थापत्त्युत्थापनाऽऽपत्तिः, अर्थप्राकट्यमात्रस्य तत्रापि सद्भावात्। इति सूत्रोक्तैव व्यवस्था सिद्धिसौधमध्यमध्यरुक्षत् ॥ २० ॥

इति प्रमाणनयतत्त्वालोकालङ्कारे श्रीरत्नप्रभाचार्यविरचितायां रत्नाकरावतारिकाख्यलघुटीकायां प्रमाणस्वरूपनिर्णयो नाम प्रथमः परिच्छेदः।



---

[1] प्रामाण्यमपि इति पाठान्तरम्।

अर्हम्

# द्वितीयः परिच्छेदः ।

एवं प्रमाणस्य स्वरूपं प्रतिपाद्य संख्यां समाख्यान्ति—

## तद् द्विभेदं प्रत्यक्षं च परोक्षं च ॥ १ ॥

अक्षमिन्द्रियं प्रतिगतम्— इन्द्रियाधीनतया यदुत्पद्यते तत्प्रत्यक्षमिति तत्पुरुषः । नन्वक्षिशब्दादपि प्रतिपूर्वात् "प्रतिसमनुभ्योऽक्ष्ण." इत्यव्ययीभावसमासान्ते टचि प्रत्यक्षमिति सिध्यति, तत् किं न कक्षीचक्रिवांस ? । न चैवं स्पार्शनादिप्रत्यक्षं नैतच्छब्दवाच्यं स्यादिति वाच्यम्, तत्प्रवृत्तिनिमित्तस्य स्पष्टत्वस्य तत्रापि भावेन तच्छब्दवाच्यतोपपत्तेः । व्युत्पत्तिनिमित्तमात्रतया ह्यत्राऽक्षिशब्द' शब्यते, कथमन्यथाऽक्षशब्दोपादानेऽप्यनिन्द्रियप्रत्यक्षस्य तच्छब्दवाच्यता चतुरस्रा स्यात् ? । अथ कथमेवं प्रत्यक्ष प्रेक्षाक्षण', प्रत्यक्षा पक्ष्मलाक्षीति स्त्रीपुंसभाव. ?, अस्याव्ययीभावस्य सदा नपुंसकत्वाद् । नैवम्, प्रत्यक्षमस्यास्तीत्यर्शआदित्वेनादन्तत्वात् तद्भावसिद्धे' । अत्रोच्यते—एवमपि प्रत्यक्षो बोध , प्रत्यक्षा बुद्धिरित्यत्र पौंस्न स्त्रैणं च न प्राप्नोति, न ह्यत्र मत्वर्थीयार्थो घटते, प्रत्यक्षस्वरूपस्यैव वेदनस्य बोधबुद्धिशब्दाभ्यामभिधानात् । अक्षाणां परमक्षव्यापारनिरपेक्षं मनोव्यापारेणाऽसाक्षादर्थपरिच्छेदकं परोक्षमिति परशब्दसमानार्थेन परःशब्देन सिद्धम् । चशब्दौ द्वयोरपि तुल्यकक्षतां लक्षयत , तेन या प्रत्यक्षस्य कैश्चिज्ज्येष्ठताऽभीष्टा, नासौ श्रेष्ठा, इति सूचितम्, द्वयोरपि प्रामाण्य प्रति विशेषाभावात् । ननु कथमेतद् द्वैतमुपपद्यते ?, यावता प्रत्यक्षमेवैकं प्रमाणमिति चार्वाकोऽवोचत्, अपरे तु प्रत्यक्षानुमानागमोपमानार्थापत्त्यभावसंभवैतिह्यप्रातिभस्वभावान् भूयसो भेदान् प्रमाणस्य प्रोचु', तत्कथमेतत् ?

इति चेत् । उच्यते–समर्थयिष्यमाणप्रमाणभावेनानुमानेन तावच्चार्वाकस्तिरस्करणीयः, अपरे तु संभवत्प्रमाणभावाचीमत्रैवाऽन्तर्भावेन बोधनीयाः–तत्राऽनुमानागमौ परोक्षप्रकाराबेव व्याख्यास्येते, उपमानं तु नैयायिकमते तावत्–कश्चित् प्रेष्यः प्रभुणा प्रेषयांचक्रे गवयमानयेति, स गवयशब्दवाच्यमर्थमजानानः कञ्चन वनेचरं पुरुषमप्राक्षीत्–कीदृग् गवयः ? इति, स प्राह–यादृग् गौस्तादृग् गवय इति । ततस्तस्य प्रेष्यपुरुषस्याऽरण्यानी प्राप्तस्याऽऽप्तातिदेशवाक्यार्थस्मरणसहकारि गोसदृशगवयपिण्डज्ञानम् 'अयं स गवयशब्दवाच्योऽर्थ' इति प्रतिपत्तिं फलरूपामुत्पादयत् प्रमाणमिति । मीमांसकमते तु येन प्रतिपत्त्रा गौरुपलब्धो न गवय , नवाऽतिदेशवाक्यं 'गौरिव गवयः' इति श्रुतम्, तस्य विकटाटवीपर्यटनलम्पटस्य गवयदर्शने प्रथमे समुत्पन्ने सति यत्परोक्षे गवि सादृश्यज्ञानमुन्मज्जति– 'अनेन सदृशः स गौः' इति, 'तस्य गोरनेन सादृश्यम्' इति वा, तदुपमानम्,

"तस्माद् यत् स्मर्यते तत् स्यात् सादृश्येन विशेषितम् ।
प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम् " ॥ १ ॥

इति वचनादिति । तदुच्यते–एतच्च परोक्षभेदरूपायां प्रत्यभिज्ञायामेवान्तर्भावयिष्यते । अर्थापत्तिरपि

"प्रमाणषट्कविज्ञातो यत्रार्थोऽनन्यथाभवन् ।
अदृष्टं कल्पयेदन्यं साऽर्थापत्तिरुदाहृता" ॥ १ ॥

इत्येवंलक्षणाऽनुमानान्तर्गतैव, तथाहि– अर्थापत्त्युत्थापकोऽर्थोऽन्यथानुपपद्यमानत्वेनाऽनवगतः, अवगतो वा दृष्टार्थपरिकल्पनानिमित्तं स्यात् ? । न तावदनवगत., अतिप्रसङ्गात् । अथाऽवगतः, तर्ह्यन्यथाऽनुपपद्यमानत्वावगमोऽर्थापत्तेरेव, प्रमाणान्तराद् वा ?। प्राच्यप्रकारे परस्पराश्रय., तथाहि–अन्यथाऽनुपपद्यमानत्वेन प्रतिपन्नादर्थादर्थापत्तिप्रवृत्तिः, तत्प्रवृत्तेश्चाऽस्याऽन्यथानुपपद्यमानत्वप्रतिपत्तिरिति । प्रमाणान्तरं तु भूयोदर्शनम् , विपक्षेऽनुपलम्भो वा ?। भूयोदर्शनमपि

साध्यधर्मिणि, दृष्टान्तधर्मिणि वा ? । यदि साध्यधर्मिणि, तदा भूयोदर्शनेनैव साध्यस्यापि प्रतिपन्नत्वादर्थापत्तेर्वैयर्थ्यम् । अथ दृष्टान्तधर्मिणि, तर्हि तत्र प्रवृत्तं भूयोदर्शनं साध्यधर्मिण्यप्यन्यथाऽनुपपद्यमानत्वं निश्चाययति, तत्रैव वा ? । तत्रोत्तरः पक्षोऽसन्, न खलु दृष्टान्तधर्मिणि निश्चितान्यथाऽनुपपद्यमानत्वोऽर्थः साध्यधर्मिणि तथात्वेनाऽनिश्चितः स्वसाध्यं गमयति, अतिप्रसङ्गात् । प्रथमपक्षे तु, लिङ्गार्थापत्त्युत्थापकार्थयोर्भेदाभावः । विपक्षेऽनुपलम्भात् तदवगम इति चेत् । नन्वसावनुपलम्भमात्ररूपोऽनिश्चित , निश्चितो वा तदवगमयेत् ? । प्रथमपक्षे, तत्पुत्रत्वादेरपि गमकत्वापत्तिः । निश्चितश्चेत्, तर्ह्यनुमानमेवार्थापत्तिरापन्ना, निश्चितान्यथाऽनुपपत्तेरनुमानरूपत्वात् । न च सपक्षसद्भावासद्भावकृतोऽनुमानार्थापत्त्योर्भेद , पक्षधर्मतासहितादनुमानात् तद्रहितस्य प्रमाणान्तरत्वानुषङ्गात् । न च पक्षधर्मत्ववन्ध्यमनुमानमेव नास्तीति वाच्यम्,

"पित्रोश्च ब्राह्मणत्वेन पुत्रब्राह्मणताऽनुमा ।
सर्वलोकप्रसिद्धा, न पक्षधर्ममपेक्षते " ॥ १ ॥

इति भट्टेन स्वयमभिधानात् ॥

यदपि–

"प्रत्यक्षादेरनुत्पत्ति. प्रमाणाभाव उच्यते ।
साऽऽत्मनोऽपरिणामो वा विज्ञान वाऽन्यवस्तुनि " ॥ १ ॥

सेति प्रत्यक्षाद्यनुत्पत्ति., आत्मनो घटादिग्राहकतया परिणामाभाव प्रसज्यपक्षे, पर्युदासपक्षे पुनरन्यस्मिन् घटविविक्तताऽऽख्ये वस्तुन्यभावे घटो नास्तीति विज्ञानम्. इत्यभावप्रमाणमभिधीयते । तदपि यथासभव प्रत्यक्षाद्यन्तर्गतमेव, तथाहि–

"गृहीत्वा वस्तुसद्भाव स्मृत्वा च प्रतियोगिनम् ।
मानस नास्तिताज्ञानं जायतेऽक्षानपेक्षया" ॥ १ ॥

इतीयमभावप्रमाणजनिका सामग्री । तत्र च भूतलादिकं वस्तु प्रत्यक्षेण घटादिभि. प्रतियोगिभिः ससृष्टम्, असंसृष्ट वा गृह्येत ?।

नाद्यः पक्षः, प्रतियोगिसंसृष्टस्य भूतलादिवस्तुनः प्रत्यक्षेण ग्रहणे तत्र प्रतियोग्यभावग्राहकत्वेनाऽभावप्रमाणस्य प्रवृत्तिविरोधात् । प्रवृत्तौ वा न प्रामाण्यम्, प्रतियोगिन सत्त्वेऽपि तत्प्रवृत्तेः । द्वितीयपक्षे तु, अभाव-प्रमाणवैयर्थ्यम्, प्रत्यक्षेणैव प्रतियोगिनां कुम्भादीनामभावप्रतिपत्ते । अथ न संसृष्ट नाप्यसंसृष्ट प्रतियोगिभिर्भूतलादिवस्तु प्रत्यक्षेण गृह्यते, वस्तुमात्रस्य तेन ग्रहणाभ्युपगमादिति चेत् । तदपि दुष्टम्, ससृष्टत्वा-ससृष्टत्वयोः परस्परपरिहारस्थितिरूपत्वेनैकनिषेधेऽपरविधानस्य परि-हर्तुमशक्यत्वात्, इति सदसद्रूपवस्तुग्रहणप्रवणेन प्रत्यक्षेणैवाऽय वेद्य-ते । क्वचित्तु तदघट भूतलमिति स्मरणेन, तदेवेदमघटं भूतलमिति प्रत्यभिज्ञानेन, योऽग्निमान् न भवति नासौ धूमवानिति तर्केण, नात्र धूमोऽनग्नेरित्यनुमानेन, गृहे गर्गो नास्तीत्यागमेनाऽभावस्य प्रतीते. क्वा-ऽभावप्रमाण प्रवर्तताम् ? ॥

संभवोऽपि समुदायेन समुदायिनोऽवगम इत्येवंलक्षणः 'संभवति खार्यां द्रोण' इत्यादि नानुमानात् पृथक्, तथाहि—खारी द्रोणवती, खारीत्वात्, पूर्वोपलब्धखारीवत् ॥

ऐतिह्यं त्वनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमितीहोचुर्वृद्धा', यथा—'इह वटे यक्ष प्रतिवसति' इति । तदप्रमाणम्, अनिर्दिष्टप्रवक्तृकत्वेन सांशयिकत्वात्, आप्तप्रवक्तृकत्वनिश्चये त्वागम इति ॥

यदपि प्रातिभमक्षलिङ्गशब्दव्यापारानपेक्षमकस्मादेव 'अद्य मे महीपतिप्रसादो भविता' इत्याद्याकारं स्पष्टतया वेदनमुदयेत्, तदप्य-निन्द्रियनिबन्धनतया मानसमिति प्रत्यक्षकुक्षिनिक्षिप्तमेव । यत्पुनः प्रियाप्रियप्राप्तिप्रभृतिफलेन सार्ध गृहीतान्यथाऽनुपपत्तिकात्मनः प्रसा-दोद्वेगादेर्लिङ्गादुदेति, तत् पिपीलिकापटलोत्सर्पणोत्थज्ञानवदस्पष्टमनु-मानमेव । इति न प्रत्यक्षपरोक्षलक्षणद्वैविध्यातिक्रमः शक्रेणाऽपि कर्तुं शक्य. ॥ १ ॥

प्रत्यक्षं लक्षयन्ति—

**स्पष्टं प्रत्यक्षम् ॥ २ ॥**

प्रबलतरज्ञानावरणवीर्यान्तराययोः क्षयोपशमात् क्षयाद् वा स्पष्टताविशिष्टं वैशद्यास्पदीभूतं यत् तत् प्रत्यक्षं प्रत्येयम् ॥ २ ॥

स्पष्टत्वमेव स्पष्टयन्ति—

**अनुमानाद्याधिक्येन विशेषप्रकाशनं स्पष्टत्वम् ॥३॥**

अनुमानादिभ्यो वक्ष्यमाणपरोक्षप्रकारेभ्योऽतिरिकेण यद्विशेषाणां नियतवर्णसंस्थानाद्यर्थाकाराणां प्रतिभासनं ज्ञानस्य तत् स्पष्टत्वमिति ॥ ३ ॥

प्रत्यक्षस्य प्रकारप्रकाशनायाहुः—

**तद् द्विप्रकारम्—सांव्यवहारिकं पारमार्थिकं च ॥४॥**

संव्यवहारो बाधारहितप्रवृत्तिनिवृत्ती प्रयोजनमस्येति सांव्यवहारिकम्, बाह्येन्द्रियादिसामग्रीसापेक्षत्वादपारमार्थिकम्, अस्मदादिप्रत्यक्षमित्यर्थः । परमार्थे भवं पारमार्थिकं मुख्यम्, आत्मसंनिधिमात्रापेक्षम्, अवध्यादिप्रत्यक्षमित्यर्थ ॥ ४ ॥

साव्यवहारिकस्य प्रकारौ दर्शयन्ति—

**तत्राद्यं द्विविधमिन्द्रियनिबन्धनमनिन्द्रियनिबन्धनं च ॥५॥**

इन्द्रियाणि चक्षुरादीनि निबन्धनमस्येतीन्द्रियनिबन्धनम् । नन्विन्द्रियज्ञाने मनोऽपि व्याप्रियतेति कथं न तेन व्यपदेशः ? । उच्यते—इन्द्रियस्याऽसाधारणकारणत्वाद्, मनः पुनरनिन्द्रियवेदनेऽपि व्याप्रियत इति साधारणं तत् । असाधारणेन च व्यपदेशो दृश्यते, यथा—पयःपवनाऽऽतपादिजन्यत्वेऽप्यङ्कुरस्य बीजेनैव व्यपदेशः—शाल्यङ्कुरः, कोद्रवाङ्कुरोऽयमिति । अनिन्द्रियं मनो निबन्धनं यस्य तत्तथेति ॥

इदमिदानीं मनाग् मीमांसामहे—प्राप्यकारीणीन्द्रियाणि, अप्राप्यकारीणि वेति । तत्र प्राप्यकारीण्येवेति कणभक्षाऽक्षपादमीमांसकसांख्या समाख्यान्ति । चक्षुःश्रोत्रेतराणि तानि तथेति ताथागताः । चक्षुर्वर्जानीति तु तथा स्याद्वादाऽवदातहृदया । तत्र प्रथमे प्रमाणयन्ति—

चक्षुः प्राप्य मतिं करोति विषये बाह्येन्द्रियत्वादितो

यद् बाह्येन्द्रियताऽऽदिना परिगतं तत् प्राप्यकारीक्षितम् ।
जिह्वावत् प्रकृत तथा च विदितं तस्मात् तथा स्थीयतां
नाऽत्राऽसिद्धिमुखश्च दूषणकणस्तल्लक्षणाऽनीक्षणात् ॥ १ ॥
अद्रिचन्द्रकलनेषु या पुनर्यौगपद्यधिषणा मनीषिणाम् ।
पद्मपत्रपटलीविलोपवत् सत्वरोदयनिबन्धनैव सा ॥ २ ॥
प्रथमत. परिसृत्य शिलोच्चयं निकटत. क्षणमीक्षणमीक्षते ।
तदनु दूरतराम्बरमण्डलीतिलककान्तमुपेत्य सितत्विषम् ॥ ३ ॥
कुर्महेऽत्र वयमुत्तरकेली कीदृशी दृगिह धर्मितयोक्ता ? ।
किं नु मांसमयगोलकरूपा, सूक्ष्मताभृदपरा किमु काऽपि ? ॥४॥
आदिमा यदि तदाऽपि किमर्थो लोचनाऽनुसरणव्यसनी स्यात् ? ।
लोचन किमुत वस्तुनि गत्वा संसजेत् प्रिय इव प्रणयिन्याम् ?॥५॥
प्रत्यक्षबाधः प्रथमप्रकारे प्राकारपृथ्वीधरसिन्धुरादि ।
संलक्ष्यते पक्ष्मपुटोपटङ्की प्रत्यक्षकाले कलयाऽपि नो यत् ॥६॥
पक्षे परत्रापि स एव दोष सर्पद् न वस्तु प्रतिवीक्ष्यतेऽक्षि ।
संसर्पणे वाऽस्य सकोटरत्वप्राप्त्या पुमान् किं न जरद्द्रुम स्यात्?॥७॥
चक्षुष. सूक्ष्मतापक्षे सूक्ष्मता स्यादमूर्तता ।
यद्वाऽल्पपरिमाणत्वमित्येषा कल्पनोभयी ॥ ८ ॥
स्याद् व्योमवद् व्यापकताप्रसक्त्या सर्वोपलम्भ. प्रथमप्रकारे ।
प्राकारकान्तारविहारहारमुख्योपलम्भो न भवेद् द्वितीये ॥ ९ ॥
न खलु नखलु शक्तं स्वप्रमाणात् प्रथिष्ठे
पटकटशकटादौ भेदकारि प्रसिद्धम् ।
अथ निगदसि तस्मिन् रश्मिचक्र क्रमेण
प्रसरति तत एतत् स्यादनल्पप्रकाशम् ॥ १० ॥

तथाहि—

प्रोद्दाममाणिक्यकणानुकारी दीपाङ्कुरस्त्विट्पटलीप्रभावात् ।
किं नैव कश्मीरजकज्जलादीन् प्रथीयसोऽपि प्रथयत्यशेषान् ? ॥११॥
नन्वेवमध्यक्षतिरस्क्रिया स्यात् पक्षे पुरस्तादुपलक्षितेऽस्मिन् ।

प्रौढप्रभामण्डलमण्डितोऽर्थो नाऽऽभासते यत्प्रतिभासमानः ॥ १२॥
अथाऽप्यनुद्भूततया प्रभायाः पदार्थसपर्कजुषोऽप्यनीक्षा ।
सिद्धिस्तदानीं कथमस्तु तस्या ब्रवीषि चेत् तैजसताख्यहेतोः ॥१३॥
रूपादिमध्ये नियमेन रूपप्रकाशकत्वेन च तैजसत्वम् ।
प्रभाषसे चक्षुषि सम्प्रसिद्धं यथा प्रदीपाङ्कुरविद्युदादौ ॥ १४ ॥
तदिदं घुसृणविमिश्रणमन्ध्रपुरन्ध्रीकपोलपालीनाम् ।
अनुहरते व्यभिचाराद् रूपेक्षणसन्निकर्षेण ॥ १५ ॥
द्रव्यत्वरूपेऽपि विशेषणे स्याद् हेतोरनैकान्तिकताऽञ्जनेन ।
तस्यापि चेत् तैजसतां तनोषि तन्वादिना किं नु तदाऽपराद्धम्? ॥१६॥
सौवीरसौवर्चलसैन्धवादि निश्चिन्वते पार्थिवमेव धीराः ।
कृशानुभावोपगमोऽस्य तस्मादयुक्त एव प्रतिभात्यमीषाम् ॥१७॥
तथा च—
सौवीरसौवर्चलसैन्धवादिकं स्यादाकरोद्भूतिवशेन पार्थिवम् ।
मृदादिवद्, न व्यभिचारचेतनं चामीकरेणाऽनुगुणं निरीक्ष्यते ॥१८॥
चामीकरादेरपि पार्थिवत्वं लिङ्गेन तेनैव निवेदनीयम् ।
शाब्दप्रमाणेन न चात्र बाधा पक्षस्य यद् नास्ति तदत्र सिद्धम् ॥१९॥
अञ्जनं मरिचरोचनादिकं पार्थिवं ननु तवाऽपि संमतम् ।
अञ्जनेऽपि तदसौ प्रवृत्तिमानप्रयोजकविडम्बडम्बरी ॥ २० ॥
हनूमल्लोललाङ्गूललम्बात् ते साधनादतः ।
न सिद्धिस्तैजसत्वस्य दृष्टसुस्पष्टदूषणात् ॥ २१ ॥

चक्षुर्न तैजसमभास्वरतिग्मभावा-
दम्भोवदित्यनुमितिप्रतिषेधनाच्च ।
सिद्धिं दधाति नयनस्य न तैजसत्वं
तस्मादमुष्य घटते किमु रश्मिवत्ता? ॥ २२ ॥

अपि च,
प्रत्यक्षबाधं समलक्षि पक्षे न रश्मयो यद् दृशि दृष्टपूर्वाः ।
तथा च शास्त्रेण तवैव कालातीतत्वदोषोऽप्युदपादि हेतोः ॥ २३ ॥

अनुद्भवद्रूपजुषो भवेयुश्चेद् रश्मयस्तत्र ततो न दोष ।
नन्वेवमेतस्य पदार्थसार्थप्रकाशकत्वं न सुवर्णवत् स्यात् ॥ २४ ॥
आलोकसाचिव्यवशादथाऽस्य प्रकाशकत्व घटनामियर्ति ।
नन्वेवमेतत्सचिवस्य किं स्यात् प्रकाशकत्वं न कुटीकुटादे. ?॥२५॥
अथाऽस्तु कामं, ननु तैजसत्वमुत्तेजितं किं न भवेत् त्वयाऽस्य ?।
तथा च नव्यस्त्वदुपज्ञ एषोऽद्वैतप्रवादोऽजनि तैजसत्वे ॥ २६ ॥

उत्पद्यन्ते तरणिकिरणश्रेणिसंपर्कतश्चेत्
तत्रोद्भूता॰ सपदि रुचयो लोचने रोचमाना. ।
यद् गृह्यन्ते न खलु तपनालोकसंपत्प्रतान-
स्तस्मिन् हेतुर्भवति हि दिवा दीपभासामभास. ॥ २७ ॥

अत्रेय प्रतिक्रिया—

मुष्टिग्राह्ये कुवलयदलश्यामलिम्नाऽवलिप्ते
स्फीते ध्वान्ते स्फुरति चरतो घूककाकोदरादे. ।
किं लक्ष्यन्ते क्षणमपि रुचो लोचनेनैव यस्मा-
दालोकस्य प्रसरणकथा काचिदप्यत्र नास्ति ? ॥ २८ ॥

उत्पत्तिरुद्भूततयाऽथ तासा तत्रैव यत्राऽस्ति रविप्रकाश. ।
काकोदरादेरपि तर्हि नैताः कीटप्रकाशे कुशला भवेयु ॥ २९ ॥
अविवरतिमिरव्यतिकरपरिकरिताऽपवरकोदरे क्वचन ।
वृषदंशदृशि न दृष्टा मरीचयः किमु कदाचिदथ ? ॥ ३० ॥
अत एव विलोकयन्ति सम्यक् तिमिराङ्कुरकरम्बितेऽपि कोणे ।
मूषकपरिपन्थिनः पदार्थाञ्ज्वलनालोकविजृम्भणं विनैव ॥३१ ॥

अत्रोत्तरम्—

चाकचिक्यप्रतीभासमात्रमत्रास्ति वज्रवत् ।
नांशवः प्रसरन्तस्तु प्रेक्ष्यन्ते सूक्ष्मका अपि ॥ ३२ ॥

मार्जारस्य यदीक्षणप्रणयिनः केचिद् मयूखाः सखे !
विद्येरन् न तदा कथं निशि भृशं तच्चक्षुषा प्रेक्षिते ।
प्रोन्मीलत्करपुञ्जपिञ्जरतनौ संजातवत्युन्दुरे

प्रोज्जृम्भेत् तवाऽपि हन्त ! धिषणा दीप्रप्रदीपाद् यथा ?॥३३॥
कृशतरतया तेषां नो चेदुदेति मतिस्तव
प्रभवति कथं तस्याऽप्यस्मिन्नसौ निरुपप्लवा ? ।
घटननिपुणा साक्षात् प्रेक्षाविधौ हि ततिस्त्विषां
न खलु न समा धीमन् ! सा चोभयत्र विभाव्यते ॥ ३४ ॥
अमूदृग्मूषिकारीणां तस्मादस्ति स्वयोग्यता ।
यया तमस्यपीक्षन्ते न चक्षू रश्मिवत् पुनः ॥ ३५ ॥
इत्थ न चक्षुषि कथञ्चिदपि प्रयाति
ससिद्धिपद्धतिमियं खलु रश्मिवत्ता ।
तस्मात् कथ कथय तार्किक ! चक्षुषः स्यात्
प्राप्यैव वस्तुनि मतिप्रतिबोधकत्वम् ? ॥ ३६ ॥
बहिरर्थग्रहौन्मुख्य बहिष्कारणजन्यता ।
स्थायित्वं वा बहिर्देशे किं बाह्येन्द्रियता भवेत् ? ॥ ३७ ॥
तत्रादिमायां भिदि चेतसा स्यादेतस्य हेतोर्व्यभिचारचिह्नम् ।
अप्राप्यकारि प्रकरोति यस्माद् मन्दाकिनीमन्दरबुद्धिमेतत् ॥३८॥
दोष. स एवोत्तरकल्पनायां यदात्मनः पुद्गल एष बाह्य. ।
चेतश्च तस्मादुपजायमानमेतद् बहिष्कारणजन्यताभृत् ॥ ३९ ॥
चेत सनातनतया कलितस्वरूपं
सर्वापकृष्टपरिमाणपवित्रितं च ।
प्रायः प्रिय प्रणयिनीप्रणयातिरेका-
देतत् करोति हृदये न तु तर्कतज्ज्ञः ॥ ४० ॥
एतदत्र विततीक्रियमाणं प्रस्तुतेतरदिव प्रतिभाति ।
विस्तराय च भवेदिति चिन्त्यं तद् विलोक्य गुरुगुम्फितवृत्तिम्॥४१॥
पक्षे तृतीये विषयप्रदेशः शरीरदेशो यदि वा बहि. स्यात् ?।
स्थायित्वमाद्ये विषयाश्रितत्वं यद्वा प्रवृत्तिर्विषयोन्मुखी स्यात्?॥४२॥
प्राचीनपक्षे प्रतिवाद्यसिद्धिकलङ्कपङ्क समुपैति हेतोः ।

स्याद्वादिना यत् प्रतिवादिनाऽस्य नाऽङ्गीकृतं मेयसमाश्रितत्वम् ॥४३॥
पक्षे तथा साधनशून्यताऽस्मिन् दृष्टान्तदोष. प्रकट. पटूनाम् ।
जिह्वेन्द्रिय नार्थसमाश्रित यद् विलोकयामासुरमी कदाचित् ॥४४॥
द्वितीयकल्पे किमसौ प्रवृत्तिरर्थाभिमुख्येन विसर्पण स्यात् ?।
आश्रित्य किं वा विषयप्रपञ्चं प्रतीतिसपत्प्रतिबोधकत्वम् ? ॥४५॥
पक्षे पुरश्चारिणि सिद्धिवन्ध्यं स्यात् साधनं जैनमतानुगानाम् ।
यस्माद् न तैर्लोचनरश्मिचक्रमङ्गीकृत वस्तुमुखं प्रसर्पत् ॥४६॥
निदर्शनस्य स्फुटमेव दृष्टं वैकल्यमत्रैव हि साधनेन ।
पदार्थसार्थं प्रति यद् न सर्पज्जिह्वेन्द्रिय केनचिदिष्टपूर्वम् ॥ ४७ ॥
पक्षान्तरे तु व्यभिचारमुद्रा किं चेतसा नैव समुज्जजृम्भे ? ।
यस्मात् तदप्राप्य सुपर्वशैलस्वर्गे संमुत्पादयति प्रतीतिम् ॥ ४८ ॥
शरीरस्य बहिर्देशे स्थायित्वं यदि जल्प्यते ।
बाह्येन्द्रियत्वमत्र स्यात् संदिग्धव्यभिचारिता ॥ ४९ ॥
अप्राप्तार्थपरिच्छेदेनाऽपि सार्धं न विद्यते ।
हेतोर्बाह्येन्द्रियत्वस्य विरोधो बत कश्चन ॥ ५० ॥
क्वचित् साध्यनिवृत्त्या तु हेतुव्यावृत्तिदर्शनात् ।
प्रतिबन्धप्रसिद्धिश्चेत् तदाऽत्रापि कथं न सा ? ॥ ५१ ॥
रसनस्पर्शनघ्राणश्रोत्राण्येन्द्रियताबलात् ।
चक्षुरप्राप्यविज्ञातृ मनोवत् प्रतिपद्यताम् ॥ ५२ ॥
साध्यव्यावृत्तितोऽत्रापि हेतुव्यावृत्तिरीक्षिता ।
न च कश्चिद् विशेषोऽस्ति येनैकत्रैव सा मता ॥ ५३ ॥
बाह्येन्द्रियत्वं सकलङ्कमेवं न तार्किकान् प्रीणयितुं तदीष्टे ।
भ्रूविभ्रमो दुर्भगभामिनीनां वैदग्ध्यभाजो भजते न चेत. ॥५४॥
किञ्चाऽत्र संसूचितमादिशब्दाद् वृत्ते पुरश्चारिणि कारकत्वम् ।
यत् प्राप्यकारित्वसमर्थनाय नेत्रस्य तत् काणदृगञ्जनाभम् ॥५५॥
यस्मादिदं मन्त्रजपोपसर्पत्प्रोद्दामरामाव्यभिचारदोषात् ।
उत्तालवेतालकरालकेलीकलङ्कितश्रीकमिवाऽत्रभाति ॥ ५६ ॥

तथाहि—

कनकनिकषस्निग्धां मुग्धा मुहुर्मधुरस्मितां

चटुलकुटिलभ्रूविभ्रान्तिं कटाक्षपटुच्छटाम् ।

त्रिजगति गता कश्चिद् मन्त्री समानयति क्षणात्

तरुणरमणीमाराद् मन्त्रान् मनोभुवि सस्मरन् ॥ ५७ ॥

कश्चिदत्र गदति स्म यत् पुनर्मन्त्रमन्त्रणगवी समानयेत् ।
युक्तमेव मदिरेक्षणादिकं तेन नाऽभिहितदूषणोदय ॥ ५८ ॥
मन्त्रस्य साक्षाद् घटना प्रियादिना परम्परातो यदि वा निगद्यते ? ।
साक्षाद् न तावद् यदयं विहायसो ध्वनिस्वरूपस्तव समतो गुण ॥५९॥
ततोऽस्य तेनैव समं समस्ति ससक्तिवार्ता न तु पक्ष्मलाक्ष्या ।
अथाऽक्षरालम्बनवेदन स्याद् मन्त्रस्तथाऽप्यस्त्वियमात्मनैव ॥ ६० ॥
अथापि मन्त्रस्य निवेद्यते त्वया ससक्तिरेतत्पतिदेवताऽऽत्मना ।
संतोषपोषप्रगुणा च सा प्रिया प्रिय प्रति प्रेरयति स्वयोगिनीम् ॥६१॥

ब्रूमहेऽत्र ननु देवताऽऽत्मना मन्त्रवर्णविसरस्य का घटा ?।
अम्बरस्य गुण एष तत् कथं देवताऽऽत्मनि भजेत सङ्गतिम् ? ॥६२॥

आश्रयद्वारतोऽप्यस्य ससर्गो नास्ति सर्वथा ।
व्यापकद्रव्ययोर्यस्मात् ससर्गो नाऽमुना मत. ॥ ६३ ॥

व्यापकेषु वदति व्यतिषङ्ग यस्तु तेन मनसा ध्वनिना च ।
वीतवस्तुविषयेण विमृश्य स्पष्ट एव विलसन् व्यभिचार ॥६४॥

अयस्कान्तादनेकान्तस्तथाऽत्र परिभाव्यताम् ।
आक्षेपश्च समाधिश्च ज्ञेयौ रत्नाकरादिह ॥ ६५ ॥

कारकत्वमपि तद् न शोभते प्राप्यकारिणि यदीक्षणे मतम् ।
प्राप्य वस्तु वितनोति तद् मति नैव चक्षुरिति तत्त्वनिर्णय. ॥६६॥
अद्रिचन्द्रकलनेषु येत्यद प्राक् प्ररूपितमुपैति नो घटाम् ।
रश्मिसंचयविपाश्चितं हि तत् ते च तत्र नितरा व्यपाकृता. ॥६७॥

किञ्च,

१ किमपीति पाठान्तरम् ।

चक्षुरप्राप्यधीकृद् व्यवधिमतोऽपि प्रकाशकं यस्मात् ।
अन्तःकरणं यद्वद् व्यतिरेके स्यात् पुनारसना ।। ६८ ॥
अथ द्रुमादिव्यवधानभाजः प्रकाशकत्वं ददृशे न दृष्टौ ।
ततोऽप्ययं हेतुरसिद्धतायां धौरेयभावं बिभराम्बभूव ।। ६९ ॥
एतद् न युक्तं शतकोटिकाचस्वच्छोदकस्फाटिकभित्तिमुख्यैः ।
पदार्थपुञ्जे व्यवधानभाजि सजायते किं नयनाद् न संवित् ? ॥ ७० ॥
दम्भोलिप्रभृतिप्रभिद्यभिदुराश्चेद् रोचिषश्चाक्षुषः
संसर्गोपगताः पदार्थपटली पश्यन्ति तत्र स्थिताम् ।
एवं तर्हि समुच्छलन्मलभरं भित्त्वा जलं तत्क्षणात्
तेनाऽप्यन्तरितस्थितीननिमिषानालोकयेयुर्न किम् ? ॥ ७१ ॥
विध्यातास्तेन ते चेद् विमलजलभरात् किं भजन्ते न शान्ति ?
किञ्चाऽम्भः काचकूपोदरविवरगतं निष्पतेत् तत् तदानीम् ।
दोषश्चेद् नैष तूर्णं यदयमुदयते नूतनव्यूहरूपः
सर्पेयुस्तर्हि नैताः कथमपि रुचयो लोचनस्यापि तस्मिन् ।। ७२ ॥
भवति परिगमश्चेद् वेगवत्त्वादमीषां
कतिपयकलयाऽस्तु क्षीरपातस्तदानीम् ।
न च भवति कदाचिद् बुद्बुदस्यापि तस्मात्
प्रपतनमिति युक्तस्तस्य नाशः किमाशु ? ।। ७३ ॥

किञ्च,

कलशकुलिशप्राकाराद्यत्रिविष्टपकन्दरा-
कुहरकलितं विश्वं वस्तु प्रतिक्षणभङ्गुरम् ।
ज्वलनकलिकावत् किन्त्वस्मिन् निरन्तरताभ्रमः
प्रभवति, वदन्नित्थं शाक्यः कथं प्रतिहन्यते ? ।। ७४ ॥
तस्थौ स्थेमा तदस्मिन् व्यवधिमदमुना प्रेक्ष्यते येन सर्वं
तत् सिद्धा नेत्रबुद्धिर्व्यवधिपरिगतस्यापि भावस्य सम्यक् ।
कुड्यावष्टब्धबुद्धिर्भवति किमु न चेद् नेदृशी योग्यताऽस्य
प्राप्तस्यापि प्रकाशे प्रभवति न कथं लोचनाद् गन्धबुद्धिः ? ॥ ७५ ॥

किं वा नु प्रतिभासते शशधरे कर्मापि तद्रूपवद् ?
दूराच्चेद् विलसत् तदस्य हृदये लक्ष्येत किं लाञ्छनम् ? ।
तस्माच्चक्षुषि योग्यतैव शरणं साक्षी च न. प्रत्यय-
स्तत् तर्कप्रगुण ! प्रतीहि नयनेष्वप्राप्यधीकर्तृताम् ॥ ७६ ॥

बौद्धाः पुनरिदमाहुः श्रोत्रं न प्राप्यबुद्धिमाधत्ते ।
दिग्देशव्यपदेशान् करोति शब्दे यतो दृग्वत् ॥ ७७ ॥

तथाहि–

प्राच्यामत्र विजृम्भते जलमुचामत्यूर्जितं गर्जितं
प्रोन्मीलत्यलमेष चातकरवोऽक्षाम क्षण दक्षिण. ।
केका केकिकुटुम्बकस्य विलसन्त्येता कला काननाद्
दिग्देशव्यपदेशवानिति न किं शब्देऽस्ति सप्रत्यय. ? ॥७८॥

प्राप्यकारि यदि तु श्रवण स्यात् तर्हि तत्र न कथञ्चन सैष. ।
प्रस्तुत समुदियाद् व्यपदेश. शर्करास्पृशि यथा रसनायाम् ॥७९॥

वेश्याऽनुरागप्रतिमं तदेतत् सुस्पष्टदृष्टव्यभिचारदोषात् ।
घ्राण यदेतद् व्यपेदशभाजं प्राप्तप्रकाशं कुरुते मनीषाम् ॥८०॥

तथा च–

मन्दं मन्दमुदेत्ययं परिमल· प्राग् माधवीमण्डपाद्
भूय· सौरभमुद्वमन्त्युपवने फुल्ला. स्फुटं मल्लिका· ।
गन्धो बन्धुर एष दाक्षिणदिश श्रीचन्दनात् प्राप्तवा-
नित्येवं ननु विद्यते तनुभृता घ्राणात् तथा प्रत्यय. ॥८१॥

अस्ति त्वगिन्द्रियेणापि व्यभिचारविनिश्चयः ।
शेमुषीमादधानेन दिग्देशव्यपदेशिनीम् ॥ ८२ ॥

तथाहि–

सेयं समीरलहरी हरिचन्दनेन्दुसंवादिनी वनभुवः प्रसभं प्रवृत्ता ।
स्फीतस्फुरत्पुलकपल्लविताङ्गयष्टिं मामातनोति तरुणीकरपल्लवश्च ॥८३॥

अथानुमानादधिगम्य तेषा हेतूंस्ततस्तद्व्यपदेशिनी धी. ।

---

१ गगनाद् नवचन्द्रिका चेति च पाठ ।

न घ्राणत स्पर्शनतश्च तादृक् प्रत्यक्षरूपा प्रथते मनीषा ॥८४॥
श्रोत्रेऽपि सर्वं तदिदं समानमालोकमानोऽपि न मन्यसे किम् ? ।
दृष्टव्यलीकामपि कामिनीं यत् संमन्यते कामुक एव साध्वीम्॥८५॥
स्मृत्वा यथैव प्रतिबन्धमाशु शङ्खादिशब्दोऽयमिति प्रतीति ।
प्राच्यादिदूरादिगतेऽपि शब्दे तथैव युक्ता प्रतिपत्तिरेषा ॥ ८६ ॥
दिग्देशानां श्रुतिविषयता किञ्च नो युक्तियुक्ता
　युक्तत्वे वा भवति न कथ ध्वानरूपत्वमेषाम् ?।
तस्माद् भिन्नप्रमितिविषयास्ते विशिषन्ति शब्द
　सिद्धे चैवं भवतु सुतरा साधने साऽप्यसिद्धि ॥ ८७ ॥

अपि च,

गृह्यते यदि विनैष सङ्गति किं तदाऽनुगुणमारुते ध्वनौ ? ।
दूरतोऽपि धिषणा समुन्मिषेदन्यथा तु निकटेऽपि नैव सा॥८८॥
मुहुर्मरुति मन्थरं स्फुरति सानुलोमागमे
　समुल्लसितवल्लकीकणकलाकलापप्लुता ।
सकामनवकामिनीकलितघोलनाडम्बरा
　न किं निशि निशम्यते सपदि दूरत काकली ? ॥ ८९ ॥
पटुघटितकपाटसंपुटौघे भवति कथं सदनेऽथ शब्दबुद्धिः ? ।
पटुघटितकपाटसपुटौघे भवति कथ सदनेऽपि गन्धबुद्धि. ? ॥९०॥

तथाहि—

कर्पूरपारीपरिरम्भभाजि श्रीखण्डखण्डे मृगनाभिमिश्रे ।
धूमायमाने पिहितेऽप्यगारे गन्धप्रबन्धो बहिरभ्युपैति ॥ ९१ ॥
　द्वारावृतेऽपि सदने प्रणयप्रकर्षा-
　　देव प्रिये स्फुरदपत्रपया स्खलन्ती ।
　द्वारि स्थितस्य सरसा कुलबालिकायाः
　　कर्णातिथीभवति मन्मनसूक्तिमुद्रा ॥ ९२ ॥
एवं च प्राप्त एवैष शब्द. श्रोत्रेण गृह्यते ।
श्रोत्रस्याऽपि तत. सिद्धा निर्बाधा प्राप्यकारिता ॥ ९३ ॥

अथाऽस्य द्विविधस्यापि प्रकारान् प्रकटयन्ति—

**एतद्द्वितयमवग्रहेहावायधारणाभेदादेकशश्च-
तुर्विकल्पम् ॥ ६ ॥**

अवग्रहश्चेहा चाऽवायश्च धारणा च ताभिर्भेदो विशेषस्तस्मात्, प्रत्येकमिन्द्रियानिन्द्रियनिबन्धनप्रत्यक्षं चतुर्भेदमिति ॥ ६ ॥

अवग्रहादीना स्वरूपं सूत्रचतुष्टयेन स्पष्टयन्ति—

**विषयविषयिसंनिपातानन्तरसमुद्भूतसत्तामात्र-
गोचरदर्शनाज्जातमाद्यमवान्तरसामान्याका-
रविशिष्टवस्तुग्रहणमवग्रहः ॥ ७ ॥**

विषय सामान्यविशेषात्मकोऽर्थ, विषयी चक्षुरादि, तयोः समीचीनो भ्रान्त्याद्यजनकत्वेनाऽनुकूलो निपातो योग्यदेशाद्यवस्थानं तस्मादनन्तर समुद्भूतमुत्पन्न यत् सत्तामात्रगोचर नि शेषविशेषवैमुख्येन सन्मात्रविषयं दर्शन निराकारो बोधस्तस्माद् जातमाद्य सत्त्वसामान्यादवान्तरै सामान्याकारैर्मनुष्यत्वादिभिर्जातिविशेषैर्विशिष्टस्य वस्तुनो यद् ग्रहण ज्ञानं तदवग्रह इति नाम्ना गीयते ॥ ७ ॥

**अवगृहीतार्थविशेषाऽऽकाङ्क्षणमीहा ॥८॥**

अवगृहीतोऽवग्रहेण विषयीकृतो योऽर्थोऽवान्तरमनुष्यत्वादिजातिविशेषलक्षणस्तस्य विशेष कर्णाटलाटादिभेदस्तस्याकाङ्क्षण भवितव्यताप्रत्ययरूपतया ग्रहणाभिमुख्यमीहेत्यभिधीयते ॥ ८ ॥

**ईहितविशेषनिर्णयोऽवायः ॥ ९ ॥**

ईहितस्येहया विषयीकृतस्य विशेषस्य कर्णाटलाटादेर्निर्णयो याथात्म्येनाऽवधारणमवाय इति कीर्त्यते ॥ ९ ॥

**स एव दृढतमावस्थापन्नो धारणा ॥१०॥**

स इत्यवायो दृढतमावस्थापन्नो विवक्षितविषयावसाय एव सा-

दरस्य प्रमातुरत्यन्तोपचित कश्चित् कालं तिष्ठन् धारणेत्यभिधीयते । दृढतमावस्थापन्नो ह्यवाय स्वोपढौकितात्मशक्तिविशेषरूपसस्कारद्वारेण कालान्तरे स्मरण कर्तुं पर्याप्नोतीति ॥ १० ॥

नन्वनिश्चयरूपत्वादीहाया सशयस्वभावतैव, इत्यारेकामपाकुर्वन्ति–

संशयपूर्वकत्वादीहायाः संशयाद् भेदः ॥११॥

पुरुषावग्रहानन्तरं हि किमय दाक्षिणात्य उतोदीच्य इत्यनेककोटिपरामर्शिसशय, ततोऽपि प्रमातुर्विशेषलिप्सायां दाक्षिणात्येनाऽनेन भवितव्यमित्येवमीहा जायते, इति हेतुहेतुमद्भावात् तन्तुपटवद् व्यक्तमनयो पृथक्त्वम् ॥ ११ ॥

दर्शनादीना कथञ्चिदव्यतिरेकेऽपि सञ्ज्ञाभेदं समर्थयन्ते–

कथञ्चिदभेदेऽपि परिणामविशेषादेषां व्यपदेशभेदः ॥१२॥

यद्यप्येकजीवद्रव्यतादात्म्येन द्रव्यार्थादेशादमीषामैक्यम्, तथापि पर्यायार्थादेशाद् भेदोऽपीति तदपेक्षया व्यपदेशभेदोऽपि सूपपाद इति ॥१२॥

अथाऽमीषा भेदं भावयन्ति–

असामस्त्येनाऽप्युत्पद्यमानत्वेनाऽसंकीर्णस्वभावतया ऽनुभूयमानत्वात्, अपूर्वापूर्ववस्तुपर्यायप्रकाशकत्वात्, क्रमभावित्वाच्चैते व्यतिरिच्यन्ते ॥ १३ ॥

असंकीर्णस्वभावतया परस्परस्वरूपवैविक्त्येनाऽनुभूयमानत्वाद् दर्शनादयो भिद्यन्ते, तथाऽनुभवनमप्यमीषामसामस्त्येनाऽप्येकद्वित्र्यादिसंख्यतयोत्पद्यमानत्वादवसेयम्, तथाहि–प्रमातुर्विचित्रक्षयोपशमवशात् कदाचिद् दर्शनमेव, कदाचिद् दर्शनावग्रहौ, कदाचिद् दर्शनावग्रहसशयादय क्रमेण समुन्मज्जन्तीति, सिद्धमतोऽसकीर्णत्वेनैतेषामनुभवनम् । अपूर्वापूर्ववस्तुपर्यायप्रकाशकत्वक्रमभावित्वे अपि प्रत्यात्मवेद्ये एव । अत्र प्रयोगा पुनरेवम्–येऽसकीर्णस्वभावतयाऽनुभूयन्ते, अपूर्वापूर्ववस्तुपर्यायप्रकाशका, क्रमभाविनो वा, ते परस्परं

व्यतिरिच्यन्ते, यथा स्तम्भादय , अनुमानादय , अङ्कुरकन्दलकाण्डादयो वा, तथा चैत इति ॥ १३ ॥

अथाऽमीषां क्रमनियमार्थमाहु –

**क्रमोऽप्यमीषामयमेव तथैव संवेदनात्, एवंक्रमाविर्भूतनिजकर्मक्षयोपशमजन्यत्वाच्च ॥ १४ ॥**

अयमेव दर्शनावग्रहादिरमीषा क्रम , तेनैव क्रमेणानुभवात्—यदेव हि सन्मात्रमैक्षि, तदेव वर्णाद्याकारेण केनचिदवाग्राहि, तदनन्तरमनिर्धारितरूपतया संदेहास्पदीचक्रे, ततोऽपि नियताकारेणेहामासे, ततोऽपीहिताकारेण निरणायि, पुन. कालान्तरे स्मृतिहेतुत्वेन धारयाञ्चक्रे इति सर्वैरनुभूयते । दर्शनज्ञानावरणक्षयोपशमलक्षणकारणेनाऽप्येवमेव भूष्णुनाऽमीषामुत्पाद्यत्वाच्चाऽयमेव क्रम , क्रमोत्पदिष्णुना हि कारणेन क्रमेणैव स्वकार्यं जनयितव्यम् , यथा स्थासकोशकुशूलच्छत्रादिनेति ॥ १४ ॥

व्यतिरेके दोषमाहु.–

**अन्यथा प्रमेयानवगतिप्रसङ्गः ॥ १५ ॥**

अन्यथेति यथोक्तक्रमानभ्युपगमे, प्रतीयमानक्रमापह्नवे हि दर्शनादीनां प्रमेयापह्नव एव कृतो भवतीति ॥ १५ ॥

उक्तमेव क्रमं व्यतिरेकद्वारा समर्थयन्ते–

**न खल्वदृष्टमवगृह्यते, न चाऽनवगृहीतं संदिह्यते, न चाऽसंदिग्धमीह्यते, न चानीहितमवेयते, नाप्यनवेतं धार्यते ॥ १६ ॥**

स्पष्टम् ॥ १३ ॥

क्वचिदेषां तथाक्रमानुपलक्षणे कारणमाहु –

**क्वचित् क्रमस्याऽनुपलक्षणमेषामाशूत्पादात् , उत्पलपत्रशतव्यतिभेदक्रमवत् ॥ १७ ॥**

क्वचिदित्यभ्यस्ते करतलादौ गोचरे, शेषं व्यक्तम् ॥ १७ ॥

पारमार्थिकप्रत्यक्ष लक्षयन्ति–

**पारमार्थिकं पुनरुत्पत्तावात्ममात्रापेक्षम् ॥ १८ ॥**

क्षयक्षयोपशमविशेषविशिष्टमात्मद्रव्यमेवाऽव्यवहितं समाश्रित्य पारमार्थिकमेतदवध्यादिप्रत्यक्षमुन्मज्जति, न पुन. सांव्यवहारिकमिवेन्द्रियादिव्यवहितमात्मद्रव्यमाश्रित्येति भाव ॥ १८ ॥

अस्य भेदावुपदिशन्ति–

**तद् विकलं सकलं च ॥ १९ ॥**

असंपूर्णपदार्थपरिच्छेदकत्वाद् विकलम्, तद्विपरीतं तु सकलम् ॥ १९ ॥

विकलं भेदतो दर्शयन्ति–

**तत्र विकलमवधिमनःपर्यायज्ञानरूपतया द्वेधा ॥ २० ॥**

सुगमम् ॥ २० ॥

अवधिं लक्षयन्ति–

**अवधिज्ञानावरणविलयविशेषसमुद्भवं भवगुणप्रत्ययं रूपिद्रव्यगोचरमवधिज्ञानम् ॥ २१ ॥**

अवधिज्ञानावरणस्य विलयविशेष क्षयोपशमभेदस्तस्मात् समुद्भवति यत्, भव सुरनारकजन्मलक्षण, गुण. सम्यग्दर्शनादि, तौ प्रत्ययौ हेतू यस्य तत्तथा। तत्र भवप्रत्यय सुरनारकाणाम्, गुणप्रत्ययं पुनर्नरतिरश्चाम्। रूपिद्रव्यगोचरं रूपिद्रव्याणि पृथिवीपाथ.पावकपवनान्धकारच्छायाप्रभृतीनि तदालम्बनमवधिज्ञानं ज्ञेयम् ॥ श-

अत्र न्यायमार्गानुयायिनः सागिरन्ते–ननु पृथिव्यादीनां चत्वेद् सकर्णा वर्णयन्तु द्रव्यताम्, तिमिरच्छाययोस्तु द्रव्यतावाचोयुक्तिनैक्तिरिक्तैव, भासामभाव एव हि तमश्छाये गदता सच्छाये, तथापि शशधरदिनकरकरनिकरनिरन्तरप्रसरासम्भवे सर्वतोऽपि सति तमभ्रूक्षति प्रतीयते, यदा तु प्रातिनियतप्रदेशेनाऽऽतपत्रादिना प्रातिबद्धस्तं

जःपुञ्जो यत्र यत्र न संयुज्यते तदा तत्र तत्र च्छायेति प्रतीयते, प्रतिबन्धकाभावे तु स्वरूपेणाऽऽलोकः समालोक्यत इत्यालोकाभाव एव तमश्छाये। यदि च तमो द्रव्यं भवेत्, तदा रूपिद्रव्यसंस्पर्शाव्यभिचारात् स्पर्शवद्द्रव्यस्य च महत. प्रतिघातहेतुत्वात् तरलतरतुङ्गतङ्गत्तरङ्गपरम्परोपेतपारावारावतार इव, प्रथमजलधरधाराधोरणीधौताञ्जनगिरिगरीयःशृङ्गप्रतिवादिनीव, निर्यन्निर्झरझात्कारिवारिदुर्वारशीकरासारसिच्यमानाभिरामाऽऽराममहीरुहसमूहप्रतिच्छन्द इव च प्रवृत्ते तिमिरभरे संचरतः पुस' प्रतिबन्धः स्यात्। भूगोलकस्येव चाऽस्याऽवयवभूतानि खण्डावयविद्रव्याणि प्रतीयेरन्, एवं छायायामपि, इति कथ ते द्रव्ये भवेताम्?॥

अत्राभिदध्महे— तमसस्तावदभावस्वभावतास्वीकृतिरानुभविकी, आनुमानिकी वा?। न तावदानुभविकी, यतोऽभावानुभवो भावान्तरोपलम्भे सत्येव संभवी, कुम्भाभावोपलम्भवत्। न च प्रचुरतरतिमिरनिकरपरिकरितापवरकोदरे स्वकरतलादिमात्रस्याऽप्युपलम्भः संभवति, तत्कथ तदनुभूतिर्भवेत्?। कथं वा प्रदीपादिप्रभाप्राग्भारप्रोज्जृम्भणमन्तरेणाऽस्योपलम्भः?, कुम्भाद्यभावो हि तद्भावे एवानुभूयमानो दृष्टः, तत् कथमेष न्यायमुद्रातिक्रमो न कृतः स्यात्?। अथ यो भावो यावता सामग्र्येण गृह्यते तदभावोऽपि तावतैव तेन, तदिहालोकस्य स्वातन्त्र्येणालोकान्तरमन्तरेणैव ग्रहणमालोकितम्, इति तदभावस्यापि तत् किं न स्यात्?, इति चेत्। अहो! पीतविषस्याऽप्यमृतोद्गारः, एवं वदता त्वयैव तमसि द्रव्यताव्याहारात्। किमिदमीदृशमिन्द्रजालम्? इति चेत्। इदमीदृशमेवेन्द्रजालमालोक्यताम्—आलोकः किल चक्षुषा सयोगाद् गृह्यते, यदि च तदभावस्यापि तत्सामग्र्येणैव ग्रहणं स्यात्, तदा तस्यापि ग्रहणे चक्षुःसंयोगसद्भावादायाता द्रव्यत्वापत्तिः, संयोगस्य गुणत्वेन तद्वृत्तित्वात्। अथाऽसंयुक्तोऽप्ययं प्रेक्ष्यते, तदा कथं यो भावो यावतेत्याद्यं मृषोद्यं न स्यात्?, कथं वा चक्षुषः प्राप्यकारिताप्रवाद' सूपपादः स्यात्?। विशेषणविशेष्य-

भावसंबन्धबन्धुरस्यान्धकारस्य ग्रहणादयमदोष इति चेत्। कतमस्यैष विशेषणम्?। न शरीरस्य, तदन्यत्रापि प्रतिभासनात्। नापि भूतलकलशकुड्यादेः, तत एव। तर्हि भवतु नभस इति चेत्। तदशस्यम्, एतस्य तद्विशेषणविशेष्यीभावेन कदाचिदप्रतिभासनात्। तन्नैतद्भावतास्वीकृतिरानुभविकी भव्या ॥

नाऽप्यानुमानिकी, यतः कतमोऽत्र हेतुराख्यायते सङ्ख्यावता?– किं भाववैलक्षण्येन लक्ष्यमाणत्वम्, भावविलक्षणसामग्रीसमुत्पाद्यत्वम्, असत्येवाऽऽलोके तत्प्रतिभासनम्, आलोकग्रहणसामग्र्या गृह्यमाणत्वम्, तिमिरद्रव्योत्पादककारणाभावः, द्रव्यगुणकर्मातिरिक्तकार्यत्वम्, आलोकविरोधित्वम्, भावरूपताप्रसाधकप्रमाणाभावो वा?, इत्यष्टपक्षी राक्षसीव त्वत्पक्षभक्ष्यभक्षणविचक्षणोपतिष्ठते ॥

तत्र न तावदाऽऽद्यः पक्षः क्षेमङ्करः, 'कुम्भोऽयं स्तम्भोऽयम्' इति हि यथा कुम्भादयो भावा विधिमुखेन प्रत्यक्षेण प्रेक्ष्यन्ते, तथेदं तम इति तमोऽपि, अभावरूपतायां तस्य प्रतिषेधमुखेन प्रत्ययः प्रादुःष्यात्, यथा कुम्भोऽत्र नास्तीति। ननु नाशप्रध्वंसादिप्रत्यया विधिमुखेनाऽपि प्रवर्तमाना दृश्यन्ते। नैवम्, नाशादिशब्दानामेव भावप्रतिषेधाभिधायकत्वात्, अत एव हि कुम्भस्य प्रध्वंस इति सोपपदानामेषां प्रयोगोपपत्तिः, यदि तु तम प्रभृतिशब्दा अपि तत्समानार्थतामाबिभ्रीरन्, तदानी कुम्भस्याऽभाव इतिवदालोकस्य तम इत्यपि प्रोच्येत, न चैवं कश्चिद् विपश्चिदपि प्रवक्ति। अथालोकाभावे संकेतितस्तम.शब्दः, नाभावमात्रे, ततो न तथा व्यपदेश इति चेत्। नैवम्, यदि ह्यन्धकाररूपोऽभावोऽपि विधिमुखेन वीक्ष्येत, तदानीं किमन्यदेतस्य भाववैलक्षण्येन लक्ष्यमाणत्वं स्यात्? यतो हेतुसिद्धिर्भवेत् ॥

अथ भावविलक्षणसामग्रीसमुत्पाद्यत्वं हेतु', तथाहि–समवाय्यसमवायिनिमित्तकारणकलापव्यापाररूपा भावोत्पादिका सामग्री, नैव तमसीयं समगंस्त। तदशस्तम्, यतः किमिदं समवायिकारण-

नाम्ना त्वमाम्नासीः ?। यत्र कार्यं समवेतमुत्पद्यते तदिति चेत्। तदसम्यक्, समवायस्य निरन्तरसुहृद्गोष्ठीषु गौरवार्हत्वात्; तत्प्रसाधकत्वाभिमतस्य 'इह तन्तुषु पटः' इत्यादिप्रत्ययस्याप्रसिद्धेः, 'पटे तन्तवः' इत्यादिरूपस्याऽस्याऽऽबालगोपालं प्रतीतत्वात्, सिद्धौ वा इह भूतले घटाभाव इत्यभावप्रत्ययेन व्यभिचारात्। संबन्धमात्रपूर्वताप्रसाधने सिद्धसाधनात्, अविष्वग्भावमात्रनिमित्ततया तदङ्गीकारात्। एकान्तैकस्वरूपत्वेन चाऽस्यैकवस्तुसमवायसंभवे समस्तवस्तुसमवायस्य, विनश्यदेकवस्तुसमवायाभावे समस्तवस्तुसमवायाभावस्य वा प्रसङ्गात्। तत्तदवच्छेदकभेदात् तदुपपत्तौ तस्यापि कथञ्चिद्भेदापत्तेः, अनेकपुरुषावच्छिन्नपर्षदादेरपि तावत्स्वभावभावेन कथञ्चिद्भेदात्। अप्रच्युतानुत्पन्नस्थिरैकरूपतया चाऽस्याऽऽकाशसामान्याद्येतादृग्वस्तुसमाश्रितत्वमेव भवेद्, न तु कार्यवस्तुसमाश्रितत्वम्। तत्तत्सहकारिकारणकलापोपनिपातप्रभावात् कार्यसमवायस्वीकारोऽपि सनिकारः, तत्स्वभावप्रभावप्रतिबद्धाना तेषामपि सदा सन्निधानप्रधानत्वात्, तथा चास्तमिता समवायिकारणकिंवदन्ती। तदसत्त्वे किमसमवायिकारणम्?, समवायिकारणप्रत्यासन्नत्व हि तल्लक्षणम्, तदसत्त्वे कथमेतत् स्यात् ?। तथा च तच्छेषभूतस्य निमित्तकारणस्यापि का व्यवस्था ?। सन्तु वा कारणान्यमूनि, तथापि यथा कथञ्चिदालोककलापस्योत्पादः, तथा तमसोऽपि भविष्यति, किमरुचिविरचनाभिर्व्यपासितुं शक्यते?। किमस्योत्पादकमिति चेत्। आलोकस्य किमिति वाच्यम्?। तेजोऽणव इति चेत्। अस्यापि तमोऽणव एव सन्तु। सिद्धास्तावत् तैजसास्तेऽविवादेन वादिप्रतिवादिनोरिति चेत्। तामसा अपि तद्वदेव किं न सेत्स्यन्ति ?, इति त्यज्यतामाग्रहः॥

असत्येवाऽऽलोके तत्प्रतिभासनमप्यसम्यक्, न हि यस्मिन्नसत्येव यत् प्रतिभासते तत् तदभावमात्रमेव भवति, असत्येव व्यवधाने प्रतिभासमानैर्घटादिभिर्व्यभिचारात्। कथं च नैवं प्रतिबन्धकेऽसत्येव समुत्पद्यमानस्य स्फोटस्यापि तदभावमात्रता स्यात्?। अथ स्फोटो

दाहकात्मकतया स्पार्शनप्रत्यक्षेणाऽनुभूयते, अभावमात्रतायां हि तस्य नैयमौपपत्तिकी स्यात्, तर्हि तमोऽपि शैत्येन तेनैव प्रत्यक्षेण प्रेक्ष्यमाणं कथमभावस्वभावं भवेत् ? ॥

अथालोकग्रहणसामग्र्या गृह्यमाणत्वं हेतुः, तथा च शङ्करन्यायभूषणौ–"यो हि भावो यावत्या सामाग्र्या गृह्यते तदभावोऽपि तावत्यैव, इत्यालोकग्रहणसामग्र्या गृह्यमाणं तमस्तदभाव एवेति"। तदपि न किञ्चित्, तमोग्रहणसामग्र्या गृह्यमाणस्यालोकस्यैव तदभावताप्रसङ्गेनाऽनैकान्तिकत्वात्, घटपटयोर्वा समानग्रहणसामग्रीकतया परस्पराभावत्वप्रसङ्गात् ॥

अथ तिमिरद्रव्योत्पादककारणाभावो हेतुः, तथा च श्रीधरः– तमःपरमाणवः स्पर्शवन्तः, तद्रहिता वा ? । न तावत् स्पर्शवन्तः, स्पर्शवतस्तत्कार्यद्रव्यस्य क्वचिदप्यनुपलम्भात् । अदृष्टव्यापाराभावात् स्पर्शवत्कार्यद्रव्याऽनारम्भका इति चेत् । रूपवन्तो वायुपरमाणवोऽदृष्टव्यापारवैगुण्याद् रूपवत् कार्यं नारभन्ते इति किं न कल्प्येत ?, किं वा न कल्पितमेकजातीयादेव परमाणोरदृष्टोपग्रहाच्चतुर्धा कार्याणि जायन्त– इति ? । कार्यैकसमधिगम्याः परमाणवो यथाकार्यमुन्नीयन्ते, न तद्विलक्षणाः, प्रमाणाभावादिति चेत् । एवं तर्हि तामसाः परमाणवोऽप्यस्पर्शवन्तः कल्पनीयाः, तादृशाश्च कथं तमोद्रव्यमारभेरन् ? । अस्पर्शवत्त्वस्य कार्यद्रव्यानारम्भकत्वेनाऽव्यभिचारोपलम्भात् । कार्यदर्शनात् तदनुगुणं कारणं कल्प्यते, न तु कारणवैकल्येन दृष्टकार्यविपर्यासो युज्यत इति चेत् । न वयमन्धकारस्य प्रत्यर्थिनः, किन्त्वारम्भानुपपत्तेः, नीलिममात्रप्रतीतेश्च द्रव्यमिदं न भवतीति ब्रूम इति ॥ नैतदुपपत्तिपदवीं प्रतिपद्यते, यतः स्पर्शवन्त एव तामसाः परमाणवः प्रोच्यन्ते । यत्पुनस्तत्रोपादेशि– स्पर्शवतस्तत्कार्यद्रव्यस्य क्वचिदप्यनुलम्भादिति । तदसत्यम्, शीतस्पर्शवतस्तमोद्रव्यस्यैव तत्कार्यस्य दर्शनात् । तत्र स्पर्शसद्भावे किं प्रमाणम् ?, इति चेत् । तदभावे किं प्रमाणम् ? इति वाच्यम्, न हि तत्प्रतिषेधकप्रमाणमन्तरेणाऽस्पर्शवत्त्वात् का-

यद्द्रव्यानारम्भस्त्वया प्रसाधयितुं शक्यते, अस्माकं तु तत्सद्भावे प्रमाणाभावेऽपि तावद् न काचित् क्षतिः । न च नास्त्येव तत्, प्रत्यक्षस्यैव सद्भावात्, तथाहि—दिवा दिवाकरकरालातपप्रपातोपतप्तवपुषः पथिकास्तमिस्रासंतमसशैत्यसंपर्कात् प्रमोदन्ते, न च तापाभावमात्रसूत्रित एव तेषां प्रमोदः, प्रतीतिबाधात्, तन्मात्रनिमित्तो हि घटोऽत्र नास्तीतिवत् तापः संप्रति नास्तीति प्रतिषेधमुख एव प्रत्ययः प्रादुःष्यात्; न तु संप्रति शीतलीभूतं मे शरीरमिति विधिमुखः, तथात्वे हि तमोऽभावमात्रसूत्रित एवायमालोकप्रत्यय इत्यपि वावदूकस्य वदतो वदनं न वक्रीभवेत् । अथान्धकारनिबन्धनत्वे शैत्यस्पर्शप्रत्ययस्य निबिडतरघटितकपाटसंपुटे गवलकुवलयकलकण्ठीकण्ठकाण्डकृष्णान्धकारैकार्णवीभूते कारागारे क्षिप्तस्य पुंसः सुतरां तत्प्रत्ययो भवेत्, इति चेत् । तापाभावनिमित्ततायामपि सुतरां स किं तत्र न स्यात् ?, तत्रात्यन्तं तापाभावसंभवात् । तस्माद् मन्दमन्दसमीरलहरिपरिचय एव जलस्पर्शस्येव तत्स्पर्शस्याऽप्यभिव्यक्तौ हेतुः, न चासौ तत्रास्तीति न तत्र तत्प्रतीतिः प्रादुर्भवति । अनुमानतोऽपि तत्र स्पर्शप्रतीतिः, तथाहि— तमः स्पर्शवद्, रूपवत्त्वात्, पृथ्वीवत् । न च रूपवत्त्वमसिद्धम्, अन्धकारः कृष्णोऽयमिति कृष्णाकारप्रतिभासात् । ननु यदि तिमिरं श्यामरूपपरिकलितकलेवरं स्यात् तदावश्यं स्वप्रतिभासे आलोकमपेक्षेत, कुवलयकोकिलतमालादिकृष्णवस्तूनामालोकापेक्षवीक्षणत्वादिति चेत् । तद् नाऽकलङ्कम्, उलूकादीनामालोकमन्तरेणापि तत्प्रतिभासात् । अथास्मदादिप्रतिभासमपेक्ष्यैतदुच्यते । तदपि न पेशलम्, यतो यद्यपि कुवलयादिकमालोकमन्तरेणालोकयितुं न शक्यतेऽस्मदादिभिः, तथापि तिमिरमालोकयिष्यते, विचित्रत्वाद् भावानाम्, इतरथा पीतावदातादयोऽपि तपनीयमुक्ताफलप्रमुखा नालोकनिरपेक्षवीक्षणा इति प्रदीपचन्द्रादयोऽपि प्रकाशान्तरमपेक्षेरन् । इति सिद्धं तमो रूपवत् । तथा तमो रूपवत्, कार्ष्ण्यवत्त्वेन प्रतीयमानत्वात्, कुवलयवत्, इत्यतोऽपि तत्र रूपवत्त्वसिद्धिः, न खल्वरूपं कुम्भाभावादि कृष्णाद्याकारेण कदाचित्

प्रतीयमानमालोकितम्, इति रूपवत्त्वसिद्धौ च सिद्धं स्पर्शवत्त्वम्। तथा च तामसपरमाणूनां कार्यद्रव्यारम्भप्रतिषेधोपन्यस्तमस्पर्शवत्त्वं स्वरूपासिद्धम्, परस्य तामसपरमाणूनामप्रसिद्धेराश्रयासिद्ध चेति स्थितम्॥

द्रव्यगुणकर्मातिरिक्तकार्यत्वमपि न हेतुः, द्रव्यातिरिक्तकार्यत्वस्य तस्मिन्नसिद्धत्वेनैकदेशासिद्धतापत्ते.। तत्प्रसिद्धिर्हि तस्याभावरूपतया, अन्यतो वा कुतोऽप्यभिधीयते?। नाद्यः पक्षः, परस्पराश्रयप्रसङ्गात्– अभावरूपतासिद्धौ हि तस्य द्रव्यातिरिक्तकार्यत्वासिद्धि', ततोऽपि सेति। अन्यहेतुतस्तत्सिद्धौ तु स एवास्तु, किमनेन सिद्धोपस्थायिना कृतकभक्तिभृत्येनेव कर्तव्यम्?॥

आलोकविरोधित्वमपि न साधीयः, न हि यो यद्विरोधी स तदभावस्वभाव एव, वारिवैश्वानरयोः परस्पराभावमात्रतापत्ते.। अथ सहानवस्थानलक्षणो विरोधस्तिमिरस्याऽभावस्वभावतासिद्धौ साधनत्वेनाभिप्रेतः, न वध्यघातकभाव., स च भावाभावयोरेव संभवी, न पुनर्द्वयोरपि भावयोः, तदिहालोकानवकाशे सत्येव समुज्जृम्भमाणस्यान्धकारस्याऽभावरूपतैव श्रेयसी, कुम्भाभाववदिति चेत्। तदपवित्रम्, अत्रापि वध्यघातकभावस्यैव भावात्, घनतरतिमिरपूरिते पथि प्रसर्पता प्रदीपप्रभाप्राग्भारेण तिमिरनिकुरम्बाडम्बरविडम्बनात्॥

भावरूपताप्रसाधकप्रमाणाभावोऽप्यसिद्धः, तत्प्रसाधकानुमानसद्भावात्, तथाहि–भावरूपं तमः, घनतरनिकरलहरिप्रमुखशब्दैर्व्यपदिश्यमानत्वात्, आलोकवत्। न चासिद्धि. साधनस्य, तथाहि–

"रह.संकेतस्थो घनतरतम.पुञ्जपिहिते
वृथोन्मेषं चक्षुर्मुहुरुपदधानः पथि पथि।
खटत्कारादल्पादपि निभृतसंप्राप्तरमणी-
भ्रमद्भ्राम्यद्बाहुर्दमदभिकयोत्ताम्यति युवा॥ १॥
पर्यस्तो दिवसस्तटीमयमटत्यस्ताचलस्यांशुमान्
संप्रत्यङ्कुरिताऽन्धकारनिकरैर्लम्बाऽळका द्यौरभूत्।

एह्यन्तर्विश वेश्मनः प्रियसखि ! द्वारस्थलीतोरण-
स्तम्भालम्बितबाहुवल्लि ! रुदती किं त्वं पथः पश्यसि ? ॥२॥
तिमिरलहरीगुर्वीमुर्वीं करोतु विकस्वरां
हरतु नितरां निद्रामुद्रा क्षणाद् गुणिनां गणात्।
तदपि तरणे ! तेजःपुञ्जः प्रियो न ममैष ते
किमपि तिरयन् ज्योतिश्चक्रं स्वजातिविराजितम्" ॥३॥

औपचारिक एवायं तत्र तद्व्यपदेश इति चेत्। नैवम्, एतदभावरूपताप्रसिद्धिं विना घनतरादिव्यपदेशस्य भावरूपमुख्यार्थबाधाविरहेण तस्यौपचारिकत्वाऽयोगात्, तथात्वेऽपि वा तस्य तमसो भावरूपतैव प्रसिध्यति, न खलु कुम्भाद्यभावस्तथाप्रकारोपचारगोचरचारितामास्तिघ्नुते, तत्र सादृश्याद्युपचारकारणाभावात्। तथा नाभावरूपं तमः, प्रागभावाद्यस्वभावत्वाद्, व्योमवत्। न चायमपि हेतुरसिद्धः, तथाहि—आलोकस्य प्रागभावः, प्रध्वंसाभावः, इतरेतराभावः, अत्यन्ताभावो वा तमो भवेत् ? । आद्ये, एकस्य, अनेकस्य वाऽयं तत् स्यात् ? । न तावदेकस्यालोकस्य प्रागभावस्तमः, प्रदीपालोकेनेव प्रभाकरालोकेनापि तस्य निवर्त्यमानत्वात्, यस्य हि यः प्रागभावः स तेनैव निवर्त्यते, यथा पटप्रागभावः पटेनैव। नाप्यनेकस्य, एकेन निवर्त्यमानत्वात्, पटप्रागभाववदेव। न च वाच्यं प्रत्यालोकं स्वस्वनिवर्तनीयस्य तमसो भेदात् प्रदीपादिना निवर्तितेऽपि तमोविशेषे पूषादिनिवर्तनीयं तमोऽन्तरं तदा तद्भावाद् न निवर्तते, इत्येकेन निवर्त्यमानत्वादिति हेतुरसिद्ध इति, प्रदीपादिनिवर्तिततमसि प्रदेशे दिनकरादिनिवर्तनीयस्य तमोऽन्तरस्योपलब्धिलक्षणप्राप्तस्याऽनुपलब्धेः, संप्रतिपन्नवत्। यदि चेदं प्रागभावस्वभावं स्यात्, तदा प्रदीपप्रभाप्रबन्धप्रध्वंसेऽस्योत्पत्तिर्न स्यात्, अनादित्वात् प्रागभावस्य। नाप्यालोकस्य प्रध्वंसाभावस्तमः, निवर्त्यमानत्वात्, तस्यैव प्रागभाववत्। नापीतरेतराभावः, तस्य प्रसृतेऽपि प्रचण्डे मार्तण्डीये तेजसि सद्भावेन तमिस्रायामिव वासरेऽपि तमःप्रतीतिप्रसङ्गात्। नाप्यालोकस्याऽत्यन्ताभावस्तमः, तस्य स्वकारणकलापोपनिपातकाले स-

मुत्पद्यमानत्वात् । इति पक्षाऽष्टकेनाऽप्यघटमानत्वान्न नानुमानिक्यपि तमसोऽभावरूपतास्वीकृतिः ॥ एतत् सकलमपि प्रायेण च्छायायामपि समानमिति यथासभव योज्यम् । विशेषतश्चैतद् द्रव्यताप्रसिद्धिः परिपाटिप्राप्तस्याद्वादरत्नाकरादवधारणीया । यत्पुनरवाचि—तमसि सञ्चरतः पुंसः प्रतिबन्धः स्यादित्यादि, तदखिलमालोकेऽपि समानमिति स एव प्रतिविधास्यति, इति किमतिप्रयत्नेन तत्रास्माकम् ? । इति सिद्धे तमश्छाये द्रव्ये ॥ २१ ॥

मन पर्याय प्ररूपयन्ति—

**संयमविशुद्धिनिबन्धनाद् विशिष्टावरणविच्छेदाज्जातं मनोद्रव्यपर्यायालम्बनं मनःपर्यायज्ञानम् ॥२२॥**

विशिष्टचारित्रवशेन योऽसौ मन पर्यायज्ञानावरणक्षयोपशमस्तस्माद्भूत मानुषक्षेत्रवर्तिसंज्ञिजीवगृहीतमनोद्रव्यपर्यायसाक्षात्कारि यज्ज्ञानं तन्मन पर्यायज्ञानमित्यर्थः ॥ २२ ॥

सकलप्रत्यक्ष लक्षयन्ति—

**सकलं तु सामग्रीविशेषतः समुद्भूतसमस्तावरणक्षयापेक्षं निखिलद्रव्यपर्यायसाक्षात्कारिस्वरूपं केवलज्ञानम् ॥२३॥**

सामग्री सम्यग्दर्शनादिलक्षणाऽन्तरङ्गा, बहिरङ्गा तु जिनकालिकमनुष्यभवादिलक्षणा, तत. सामग्रीविशेषात् प्रकर्षप्राप्तसामग्रीतः समुद्भूतो यः समस्तावरणक्षयः सकलघातिसघातविघातस्तदपेक्षं सकलवस्तुप्रकाशस्वभावं केवलज्ञानं ज्ञातव्यम् ॥

यस्तु नैतदमंस्त मीमांसकः, मीमांसनीया तन्मनीषा, तथाहि—बाधकभावात्, साधकाभावाद् वा सकलप्रत्यक्षप्रतिक्षेप ख्याप्येत? । आद्यपक्षे प्रत्यक्षम्, अप्रत्यक्षं वा बाधकमभिदध्या. ? । प्रत्यक्ष चेत् । पारमार्थिकम्, साव्यवहारिकं वा ? । पारमार्थिकमपि विकलम्, सकलं वा ? । विकलमप्यवधिलक्षणम्, मनःपर्यायरूपं वा ? । नैतत्पक्षद्वयमपि क्षेमाय, द्वयस्याऽस्य क्रमेण रूपिद्रव्यमनोवर्गणागोचरत्वेन तद्बाधनविधा-

वधीरत्वात् । सकलं चेत्, अहो ! शुचिविचारचातुरी, यत्केवलमेव केवलप्रत्यक्षस्याऽस्याऽभावं विभावयतीति वक्षि, वन्ध्याऽपि प्रसूयतामिदानीं स्तनन्धयान्, वान्ध्येयोऽपि च विधत्तामुत्तंसान् । सांव्यवहारिकमप्यनिन्द्रियोद्भवम्, इन्द्रियोद्भवं वा ?। न तावत् प्रथमम्, अस्य प्रातिभातिरिक्तस्य स्वात्मांविष्वग्भूतसुखादिमात्रगोचरत्वात् । प्रातिभं तु तद्बाधकं नानुभूयत एव । ऐन्द्रियं तु स्वकीयम्, परकीयं वा ?। स्वकीयमपीदानीमत्र तद् बाधेत, सर्वत्र सर्वदा वा ? । प्राचि पक्षे, पिष्टं पिनष्टि भवान्, तथा तदभावस्याऽस्माभिरप्यभीष्टे. । द्वितीये तु, सर्वदेशकालानाकलय्येदं तदभावमुद्भावयेत्, इतरथा वा ?। आकलय्य चेत्, आकालं नन्दताद् भवान्, भवत्येव सकलकालकलाकलापाशेषदेशविशेषवेदिनि वेदनस्य तादृशः प्रसिद्धेः । अनाकलय्य चेत्, कथं सकलदेशकालाऽनाकलने सर्वत्र सर्वदा वेदनं तादृग् नास्तीति प्रतीतिरुल्लसेत् ?। परकीयमपीदानीमत्र तद्भावं बाधेत, सर्वत्र सर्वदा वेत्याविविकल्पजालजर्जरीभूतं न तद्बाधनधुरां धारयितु धीरतां दधाति । कथं वा परगृहरहस्याभिज्ञो भवानेवमभूत् ? । तादृक्षप्रत्यक्षप्रतिक्षेपदक्षं प्रत्यक्षं प्रावर्तिष्ट ममेति तेन कथनाचेत् । यदि कथिते प्रत्ययः, तर्हि तादृक्षाध्यक्षप्रतिक्षेपि प्रत्यक्षं नास्त्येव, इत्युत्तम्भितहस्ता वयं व्याकुर्मह इति किं न तथाऽनुमन्यसे ? । अथ न यौष्माकीणः प्रमाणप्रवीणः समुल्लापः । परकीयं कथमिति वाच्यम् ?, न खल्वयं स्वप्रत्यक्षं त्वत्प्रत्यक्षं कर्तुं शक्नोति, वचसा तु यथाऽसौ कथयति, तथा वयमपि । अथ तदुपदर्शितेऽर्थे संवादात् तद्वच. प्रमाणम् । नन्वेवं प्रत्यक्षम्, अप्रत्यक्षं वा संवादकं स्यात् ? इत्यादिपूर्वोक्तावर्तनेनाऽनवस्थावल्लिरुल्लसन्ती कथं कर्तनीया ? । किञ्च, सविदामिन्द्रियागोचरत्वादैन्द्रियमध्यक्षं सकलप्रत्यक्षस्य विधौ प्रतिषेधे वा मूकमेव वराकम् । न च त्वन्मतेनाभावः प्रत्यक्षेण प्रेक्ष्यते, तथात्वे हि किमिदानीमपह्नुतसर्वस्वेन तपस्विनाऽभावप्रमाणेन कर्तव्यम् ? । तन्न प्रत्यक्षं तद्बाधविधान-

१ सप्तमी ।

संविधानोद्धुरम् । अप्रत्यक्षमपि प्रत्यक्षाभावमात्रम्, अपरप्रमाणरूपं वा प्रणिगद्येत ? । आद्यं चेत्, तर्हि निद्राणदशायामम्भस्तम्भकुम्भाम्भोरुहाम्भोधरादिगोचरप्रत्यक्षाभावात् तेषामभावो भवेत् । द्वितीयं चेत्, भावस्वभावम्, अभावस्वभावं वा ? । भावस्वभावमप्यनुमानं, शाब्दम्, अर्थापत्तिः, उपमानं वा ? । अनुमानं चेत्, कस्तत्र धर्मी ?—सकलप्रत्यक्षम्, पुरुषो वा कश्चित् ?। सकलप्रत्यक्षं चेत्, तत्रोपादीयमानः समस्तो हेतुराश्रयासिद्धतामाश्रयेत्, भवतस्तस्याऽप्रसिद्धेः। पुरुषोऽपि सर्वज्ञः, तदन्यो वा धर्मी वर्ण्येत ? । सर्वज्ञश्चेत्, किं सर्वज्ञत्वेन निर्णीतः, पराभ्युपगतो वा ? । निर्णीतश्चेत्, कथं तत्र तादृक्षप्रत्यक्षप्रतिक्षेपः प्रेक्षाकारिणः कर्तुमुचितः ?, तन्निर्णायकप्रमाणेनैव तद्बाधनात् । अथ सर्वज्ञत्वेन परैरभ्युपगतः पुमान् वर्धमानादिर्धर्मी, तर्हि किं तत्र साध्यम्—नास्तित्वम्, असर्ववित्त्वं वा ?। न तावद् नास्तित्वम्, तथाविधपुरुषमात्रसत्तायामुभयोरविवादात्, तथाव्यवहारपारमार्थिकापारमार्थिकत्व एव विप्रतिपत्तेः । असर्ववित्त्वं चेत्, कस्तत्र हेतु—उपलब्धिः, अनुपलब्धिर्वा ? । उपलब्धिश्चेत्, अविरुद्धोपलब्धिः, विरुद्धोपलब्धिर्वा ? । अविरुद्धोपलब्धिस्तावद् व्यभिचारिणी, नित्यत्वनिषेधाभिधीयमानप्रमेयत्ववत् । विरुद्धोपलब्धिस्तु किं साक्षाद् विरुद्धोपलब्धिः, विरुद्धव्याप्तोपलब्धिः, विरुद्धकार्योपलब्धिः, विरुद्धकारणोपलब्धिः, विरुद्धसहचराद्युपलब्धिर्वा स्यात् ? । नाद्या, सर्वज्ञत्वेन साक्षाद् विरुद्धस्य किञ्चिज्ज्ञत्वस्य तत्र प्रसाधकप्रमाणाभावात् । नाग्रेतनविकल्पचतुष्टयमपि घटामटाट्यते, प्रतिषेध्यस्य हि सर्ववित्त्वस्य विरुद्धं किञ्चिज्ज्ञत्वम्, तस्य च व्याप्यं कतिपयार्थसाक्षात्कारित्वम्, कार्यं कतिपयार्थप्रज्ञापकत्वम्, कारणमावरणक्षयोपशमः, सहचरादि रागद्वेषादिकम्; न च विवादापदाने पुंसि तेषामन्यतमस्यापि प्रसाधकं किञ्चित् प्रमाणं तवाऽस्ति, यतस्तदुपलब्धीनां सिद्धिः स्यात् । वक्तृत्वरूपाविरुद्धकार्योपलब्धिरस्त्येव तन्निषेधे साधनं साधिष्ठमिति चेत् । ननु कीदृग् वक्तृत्वमत्र विवक्षाञ्चक्रे, यदसर्ववित्त्ववि-

रुद्धस्य कार्यं स्यात्?—प्रमाणविरुद्धार्थवक्तृत्वम्, तदविरुद्धार्थवक्तृत्वम्, वक्तृत्वमात्रं वा। आद्यभिदायाम्, असिद्धं साधनम्, वर्धमानादौ भगवति तथाभूतार्थवक्तृत्वाभावात्। द्वितीयभिदि तु, नेयं विरुद्धकार्योपलब्धिः, किन्तु कार्योपलब्धिरेव तद्विधिसाधनी, धूमध्वजसिद्धिनिबन्धनोपन्यस्तधूमोपलब्धिवत्, तथा च विरुद्धो हेतुः। तृतीयभेदे त्वनेकान्तः, वक्तृत्वमात्रे सर्ववित्त्वकार्यत्वस्याविरोधात्। अनुपलब्धिरपि विरुद्धानुपलब्धिः, अविरुद्धानुपलब्धिर्वा?। विरुद्धानुपलब्धिस्तावद् विधिसिद्धावेव साधीयस्ता दधाति, अनेकान्तात्मकं वस्तु, एकान्तस्वरूपानुपलब्धेः, इत्यादिवत्। अविरुद्धानुपलब्धिरपि स्वभावानुपलब्धिः, व्यापकानुपलब्धिः, कार्यानुपलब्धिः, कारणानुपलब्धिः, सहचराद्यनुपलब्धिर्वाऽभिधीयेत?। स्वभावानुपलब्धिरपि सामान्येन, उपलब्धिलक्षणप्राप्तत्वविशेषणा वा व्याक्रियेत?। पौरस्त्या तावत्, निशाचरादिना व्यभिचारिणी। द्वितीया पुनरसिद्धा, सर्ववित्त्वस्य स्वभावविप्रकृष्टत्वात्। व्यापकानुपलब्धिप्रभृतयोऽपि विकल्पा अल्पीयांसः, यतः सर्ववित्त्वस्य व्यापकं सकलार्थसाक्षात्कारित्वम्, कार्यमतीन्द्रियवस्तूपदेशः, कारणमखिलावरणविलयः, सहचरादि क्षायिकचारित्रादिकम्, न च तत्र तदनुपलब्धीनां सिद्धौ साधनं किञ्चित् तेऽस्ति, इत्यसिद्धा एवाऽमूः। अथ सर्वज्ञादन्यः कश्चिद् धर्मी, तर्हि तस्याऽसर्ववित्त्वे साध्ये सिद्धसाध्यता। तद् नानुमानं तद्बाधकम्॥ नापि शाब्दम्, यतस्तदपौरुषेयम्, पौरुषेयं वा स्यात्?। न तावदपौरुषेयम्, अपौरुषेयत्वस्य वचस्सु संभवाभावात्। पौरुषेयमपि केवलालोकाकलितपुरुषप्रणीतम्, तदितरपुरुषप्रणीतं वा?। आद्यं कथं बाधकम्?, विरोधात्। द्वितीये त्वसौ पुरुषः केवलालोकविकलाः सकलाः पुरुषपर्षदः प्रेक्षते, नवा?। प्राच्यपक्षे, कथं तत्प्रतिषेधः?, तस्यैव तदाकलितत्वात्। द्वितीयेऽपि कथन्तरां, तत्प्रणीतशब्दस्य पांशुलपादकोपदिष्टशब्दस्येव प्रमाणत्वासंभवात्॥ नाप्यर्थापत्तिस्तद्बाधिका, तदभावमन्तरेणानुपपद्यमानस्य प्रमाणषट्कनिष्टङ्कितस्यार्थस्य कस्यचिदसत्त्वात्।

नाप्युपमानम्, तस्य सादृश्यमात्रगोचरत्वात्। तन्न भावरूपं प्रमाणं तद्बाधबद्धकक्षम्। नाप्यभावरूपम्, तस्य सत्तापरामर्शिप्रमाणपञ्चकाप्रवृत्तौ सत्यां भावात्, न चासौ समस्ति, विवादास्पदं कस्यचित् प्रत्यक्षम्, प्रमेयत्वात्, पटवत्, इति तद्ग्राहकानुमानस्य प्रवृत्तेः। तन्न बाधकभावात् सकलप्रत्यक्षाऽभावः। नापि साधकाभावात्, अनुमानस्यैव तत्साधकस्येदानीमेव निवेदनात्। इति सिद्धं करतलकलितनिस्तुलस्थूलमुक्ताफलायमानाकलितसकलवस्तुविस्तारं केवलनामधेयं संवेदनम्। इति सिद्धमेव केवलज्ञानम् ॥ २३ ॥

किन्तु कतरं पुरुषमेतदास्पदीकरोतीत्यत्राहुः—

**तद्वानर्हन् निर्दोषत्वात् ॥ २४ ॥**

तत्केवलं नित्यमस्यास्तीति नित्ययोगे मतुप्, निष्क्रान्तो दोषेभ्यो रागद्वेषाऽज्ञानलक्षणेभ्यो निर्दोषस्तद्भावस्तत्त्वं तस्मात्। प्रयोगः—अर्हन् सर्वज्ञः, निर्दोषत्वात्, यस्तु नैवं स नैवं यथा रथ्यापुरुषः, तथा चार्हन्, तस्मात् सर्वज्ञ इति ॥ २४ ॥

निर्दोषत्वमस्य प्रसाधयन्ति—

**निर्दोषोऽसौ प्रमाणाऽविरोधिवाक्त्वात् ॥ २५ ॥**

प्रयोगः—अर्हन् निर्दोषः, प्रमाणाविरोधिवाक्त्वात्, यस्तु न निर्दोषः स न तथा यथा रथ्यापुरुषः, प्रमाणाविरोधिवाक् चार्हन्, ततो निर्दोष इति ॥ २५ ॥

प्रमाणाविरोधिवाक्त्वमेवाऽर्हतः प्रसाधयन्ति—

**तदिष्टस्य प्रमाणेनाऽबाध्यमानत्वात् तद्वाचस्तेनाविरोधसिद्धिः ॥ २६ ॥**

तस्याऽर्हत इष्टस्य प्रतिपाद्यतया संमतस्याऽनेकान्ततत्त्वस्य, तद्वाच इत्यर्हद्वाचः। अर्हन् सर्वत्र प्रमाणाविरोधिवाक्, तत्र प्रमाणाबाध्यमानाभिमततत्त्वत्वात्, यस्याऽभिमतं तत्त्वं यत्र प्रमाणेन न बाध्यते, स तत्र प्रमाणाविरोधिवाग्, यथा रोगादौ भिषग्वरः, न बाध्यते च

प्रमाणेनाऽर्हतोऽभिमतमनेकान्तादितत्त्वम्, तस्मात् तत्राऽसौ प्रमाणाविरोधिवाक्, इति सिद्धमर्हन्नेव सर्वज्ञ इति ॥

नन्वियं त्रिभुवनभवनान्तवर्तमानाऽन्तरितानन्तरितपदार्थप्रथा त्वत्तीर्थनाथवृत्तिर्न भवति, यतो भूभूधरप्रभृतिपदार्थप्रबन्धविधानद्वारा प्रमथपतेरेवेयमुपपद्यते, यदेतदनुमानमत्र प्ररूप्यते न्यायतात्पर्यावबोधप्रधानमनोवृत्तिविद्वद्वृन्देन—विवादपदभूतं भूभूभरादि, बुद्धिमद्विधेयम्, यतो निमित्ताधीनात्मलाभम्, यद् निमित्ताधीनात्मलाभ तद् बुद्धिमद्विधेयम्, यथा मन्दिरम्, तथा पुनरेतत्, तेन तथा । न तावद् निमित्ताधीनात्मलाभत्व वादिनः, प्रतिवादिनो वाऽप्रतीतम्, यतो भूभूधरादेरात्मीयात्मीयनिमित्तव्रातनिर्वर्तनीयता भुवनभाविभवभृत्प्रतीतैव । नाऽपि दोलायमानवेदननिमित्तम्, मतिमन्निर्वर्तनीयेतराम्बरादिपदार्थतोऽत्यन्तव्यावृत्तत्वेन । नापि विरुद्धतावरोधदुर्धरम्, अम्बरादितोऽत्यन्तव्यावृत्तत्वेनैव । नाऽपि तुरीयव्याप्याभतोप्रतिबद्धम्, इन्द्रियवेदनेन, अनुमाननाम्ना, राद्धान्ताऽभिधानेन वा मानेनाऽबाधिताऽभिप्रेतधर्मधर्म्यनन्तरप्रतिपादितत्वेन । नापि प्रत्यनुमानापमानतानिबन्धनम्, एतत्परिपन्थिधर्मोपपादनप्रत्यलानुमानाभावेन। ननु भवतीदं तावदनुमान परिपन्थिधर्मोपपादनप्रत्यलम्, यथा—भूताऽधिभूः, भूभूधरादिविधाता न भवति, वपुर्वन्ध्यत्वेन, निर्वृतात्मवत् । तदनवदातम्, यतोऽत्र त्रिनेत्ररूपो धर्मी धीधनेन प्रतिपन्नः, अप्रतिपन्नो वा प्ररूपितः ? । न तावदप्रतिपन्नः, यदेवमाधारद्वाराऽप्रतीतत्वोपद्रवो वपुर्वन्ध्यताव्याप्योपनिपातीभवन् न निरोद्धु तीर्यते । यदि पुनः प्रतिपन्नोऽयं धर्मी, तदा येन मानेन प्रतिपत्तिर्मन्मथप्रत्यर्थिनोऽभिधीयते, तेन तत्त्वादिविधानव्युत्पन्नमतेरेवेयमिति तत्रोपादीयमाना वपुर्वन्ध्यता बाधितवर्त्मैव, इति न नाम प्रवर्तितुं पर्याप्नोति । तदेवं निमित्ताधीनात्मलाभताव्याप्यमत्यन्तपूतरूपं पर्वतादेर्धीमद्धेतुताप्रतिपादनाऽवदातमेवेति ॥

तत्राभिधीयते—यदिदं तावद् निमित्ताधीनात्मलाभत्वं व्याप्यमा-

-रूपितं तद् द्रव्यद्वारा, पर्यायद्वारा वा? इति भेदोभयी। यद्याद्य पन्था प्रथ्यते, तदानीमप्रतीतिर्नामव्याप्योपताप', यतो द्रव्यरूपतया पृथ्वीपर्वतादेर्नित्यत्वमेव प्रतिवादिनाऽभ्युपेयते। ननु भूभूधराद्यमुत्पादवत्, अवयवित्वेन, यदेव तदेवं यथेन्दीवरम्, अवयविरूपं पुनरिदम्, तदुत्पादवदेव, इत्यनुमानेन तन्नित्यता निर्मूलोन्मूलितैवेति। नैतद्धीमद्वृत्तिविधानप्रधानम्, यतो भूभूधरादेरवयवित्वमवयवारभ्यत्वेन, यद्वाऽवयवव्रातवर्तमानतया मन्यते? न प्रथमविधा विबुधाऽवधानधाम, यतो न नामैतत्पृथ्वीपृथ्वीधरप्रभृतिद्रव्यमभूतपूर्वमवयववृन्देन निर्वर्तितमिति प्रतिवादिन प्रतीतिर्विद्यते। यदि पुनरवयववृत्तिभेदोऽभिधीयते, तदानीमवयवत्वेन दोलायमानताऽत्र, यतो 'अवयवोऽयमवयवोऽयम्' इतीत्थं बुद्धिवेद्यमवयवत्वमवयववितानवृत्ति भवति, न पुनरुत्पादपराधीनम्, नित्यत्वेन। ननु नार्थोऽनेन दुर्भेदप्रबन्धप्रतिपादनेन, प्रतीतोऽयमवयवी तावद्घादिवितते रविवादेन पद्मपत्रपात्रदात्रादिरिति न नाम न प्रतीतः, अपि त्वात्माऽपि तथा नियमेन प्रतीतो वर्तते, न पुनरुत्पादवानित्यनुमेयतत्तुल्यतद्विरुद्धवृत्तितोपद्रवः। यदि तु पर्यायद्वारा निमित्ताधीनात्मलाभत्वं भूभूधरादेरभिधीयते, तदा नरामरादिपर्यायद्वारोत्पद्यमानात्मनोऽपि बुद्धिमदुत्पाद्यत्वमापद्यते। ननु नरामराद्युत्पादनप्रत्यलधर्माधर्मोत्पाद्यानुभवायतनभूता तथाविधा तनुरेवोत्पद्यते, न पुनरात्मा लवमात्रतोऽपि, अनादिनिधनत्वेन। यदि पुनरात्माऽप्युत्पत्तिविपत्तिधर्मा भवति, तदानीं भूतमात्रतत्त्ववादिमतापत्ति', आत्मनः पूर्वोत्तरभवानुयायिनोऽभेदिनोऽनभ्युपेतत्वेनेति। तद् न बन्धुरम्, यतो यद्यात्मनोऽभिन्नरूपतैवाऽऽवेद्यते, तदाऽन्यतरनरामरादिभववर्त्येवाऽयमपरिमेयात्मीयानुभवनीयतत्तद्भवपर्यायप्रबन्धानुभवनेन द्वितीयादिभवानुभववान् न भवितुमुपपद्यते, वेद्यते त्वनेनेयं भवपर्यायपरम्परा, इति तद्रूपतयाऽयमुत्पत्तिमानिति नियम्यते। नाप्येवं भूतमात्रतत्त्ववादितापत्ति', आत्मनो द्रव्यरूपतया नित्यत्वाभ्युपायेन पूर्वोत्तरभवप्रतीवितः। तन्मतेन तु न नाम द्रव्यतया

नित्यं वेदनं वर्तते, यतो भूतधर्मतयाऽनेन प्रतिपादितमेतत्, तथैत-दनुमानधर्मीन्द्रियोद्भूतबोधनाऽर्धतो बाध्यते, रूपं ध्वनिरपि नयनो-त्थप्रथाप्रत्येयमित्यादिवत्, यतोऽत्र दोलायमानविधानतत्परनरव्या-पारः पृथ्वीपृथ्वीधराभ्रतरुपुरन्दरधनुरादिर्भावव्रातो धर्मी प्ररूपितः, तत्र त्वभ्रतरुविद्युदादेरिदानीमप्युत्पद्यमानतया वेद्यमानतनोर्विधाता नोपलभ्यते । ननु भवत्येव बाधंय यद्येतद्विधानावधानप्रधानः पुमा-निन्द्रियप्रभवप्रभावालम्बनीभूतोऽभ्युपेतो भवति, यावताऽतीन्द्रियोऽय-म्, इति नायमुपद्रव. प्रभवति । तदनभिधानीयम्, यतो व्याप्तिप्र-तिपादनप्रत्यलं मानमत्रेन्द्रियद्वारोद्भूतं वेदनं तवाभिमतम्, धूमानुमा-नवत्, धूमानुमानेनापि न पारावारोद्भवौदर्यतनूनपात्तदितरतनूनपात्तु-ल्यत्वेन व्याप्ति. प्रतीता, इतीन्द्रियोद्भववेदनवेद्यभावालम्बनेनैवाऽने-नाऽनुमानेन भवितव्यम्, अन्यथा तु तेन व्याप्तिप्रतीतिर्दुरुपपादैव, ततोऽपि तत्र व्याप्त्यनालम्बनीभूतेन तेन बुद्धिमन्निमित्तेनाऽनुन्नेयता-ऽपि नाद्रियते । तथात्वेन प्रतिपादित त्वेतदत्रेन्द्रियबोधावबोध्यतया नियमेनाभ्युपेतव्यम् । यदि तु तथाभ्युपेयते, तदा नैतद् निमित्तं तरुविद्युदादेरुपलभ्यते, ततोऽनेन वेदनेनाऽत्र बाधो भवत्येव । ननु धूमानुमानप्रत्याय्यतनूनपातोऽप्येवमनेन वेदनेन बाधो भवति, यतो न तत्राऽपि विधीयमानानुमानेन प्रमात्रा तनूनपादिन्द्रियवेदनेन वेद्यते । तदसनोरमम्, यतोऽत्रानुमातुर्व्यवधिर्विद्यते, व्यवधि-मान् पुनः पदार्थो नेन्द्रियालम्बनीभवति, इति तदनालम्बनीभूत. पर्व-ततनूनपाद् न तेन बाधितुं पार्यते । यदा पुनः प्रमाता तत्र प्रवृत्तो भवति, तदानीमव्यवधानवानयं तनूनपात् तेनोपलभ्यते । तरुविद्यु-द्लताभ्रादिबुद्धिमन्निमित्तं तु तत्र प्रवर्तमानेनाऽपि नितरामवधानवता-ऽपि नोपलभ्यते । ततो भवति तत्रेन्द्रियोद्भवबोधबाधेति । ततोऽपि तथाविधधर्म्यनन्तरत्तिमित्ताधीनात्मलाभत्वरूपव्याप्यप्रतिपादनेन त्व-न्मतेन तुरीयव्याप्याभत्वोपनिपातः, मन्मतेन त्वन्तर्व्याप्तेरभावेनानि-

१ धूमानुमितेरपि इत्यपि पाठः ।

यतप्रतिपत्तिनिमित्तताऽत्र व्याप्यपराभूतिः। तथेदं निमित्ताधीनात्मलाभत्वं यदि तन्मात्रमेव व्याप्यत्वेन प्रतिपाद्यते, तदा नाभिप्रेतपदार्थप्रतीतिनिर्वर्तनपर्याप्तमनुपलब्धपूर्वोत्पत्तिव्यापारेन्द्रमूर्ध्नो मर्त्यपूर्वत्वप्रतीत्यर्थोपात्तमृन्मयत्ववत्। न नाम निपेन्द्रमूर्ध्नो मृन्मयत्वमपि भिद्यते। ननु यद्यपि मृन्मयत्वं तुल्यमेवोभयत्रापि, तथापि नेन्द्रमूर्धाऽन्यो मानवपूर्वत्वेन प्रतीतो विद्यते, ततो विवादपदापन्नोऽप्ययं तत्तुल्यत्वेन न मर्त्यनिर्वर्त्यो भवति। तद् नावदातम्, यतोऽत्रापि न भूभूधरभुवनादिप्रायः पदार्थोऽन्यो बुद्धिमन्निमित्तोपेत. परिभावितो वर्तते। ततो विवादपद्धतिप्रतिबद्धोऽप्यय न तथा भवितुं लभते। ननु निपादिर्विद्यते बुद्धिमन्निमित्तोपेत. परिभावित', अतो विवादापन्नोऽपि तथाऽनुमातुमनुरूप'। तदवद्यम्, यतोऽन्यत्रापि निपादिरेव मानवनिर्वर्त्यो विभावितो विद्यते, तत. पुरन्दरमूर्धाऽपि तन्निर्वर्त्येन नितरां भवितव्यम्। ननु नरनिर्मितनिपादितः पुरन्दरमूर्ध्नो वैरूप्यमुपलभ्यते, ततो न तत्र मर्त्यनिर्वर्त्यतानुमानमुपपन्नम्। यद्येवम्, तदानीमेतद् वैरूप्य निपादितो भूभूधरभुवनादेरपि परिभाव्यते, यतो निपादिनाऽनुपलब्धबुद्धिमद्व्यापारात्मनाऽप्युपलब्धेन नियमतो निर्वर्तितोऽयं मतिमतेति बुद्धिरुत्पाद्यते, न पुनर्भुवनादिना। ततो न निमित्ताधीनात्मलाभत्वमात्रं बुद्धिमद्धेतुत्वप्रतीतिविधानबन्धुरम्। यदा तु धरित्रीधरित्रीधरत्रिभुवनादिविधानं न प्रतीतम्, तदानीं त्रिनयनो भुवनभवनान्तर्भाविभावव्रातप्रद्योतनप्रबलवेदनप्रदीपवान्, इति निर्धनदानमनोरथप्रथैवेयमिति॥

त्यादिवचनद्वयेन स्यादिकवचनत्रयेण वर्णैस्तु।
त्रिभिरधिकैर्दशभिरयं व्यधायि शिवसिद्धिविध्वंसः॥ १॥ २६।

( ति, ते। सि, टा, ङस्। तथदधन। पबभम। यरलव। )

केवलिन. कवलाहारवत्त्वे सर्ववित्त्वं विरुध्यत इतीष्टवतो नग्नाटान् विघटयितुमाहुः—

**न च कवलाहारवत्त्वेन तस्याऽसर्वज्ञत्वम्, कवलाहा-**

रंसर्वज्ञत्वयोरविरोधात् ॥ २७ ॥

तथाहि–अनयो साक्षात्, परम्परया वा विरोधमभिदधीरन्नह्रीकाः ? । तत्र यदि साक्षात्पक्षोपक्षेपदीक्षा दक्षा विवक्षेयु क्षपणकाः, तत् क्षूणम्, न हि सति सार्वज्ञ्ये केवली कवलान् न प्राप्नोति, प्राप्तानपि नाऽऽहर्तुं शक्नोति, शक्तोऽपि वा विमलकेवलाऽऽलोकपलायनशङ्कया नाहरतीत्यस्ति सभवः, अन्तरायकेवलावरणकर्मणोः समूलकाषङ्कषणात् । अथ परम्पराकल्पकल्पनास्वल्पतल्पगा जल्पेयु, तदप्यल्पीय, यतः किमेवं सति कवलाहारस्य व्यापकम्, कारणम्, कार्यम्, सहचरादि वा सार्वज्ञ्येन विरोधमधिवसेत् ?, अशेषमपि चैतत् परस्परपरिहारेण, सहानवस्थानेन वा विरुध्येत ? । प्राचीनेन चेत्, तदानी तावकज्ञानेनाऽपि साकं कवलाहारव्यापकादेः परस्परपरिहारस्वरूपविरोधसद्भावाद् भवतोऽपि कवलाहाराभाव स्यात्, इत्यहो ! पुरुषकार, यत् स्वस्यैव प्रभवितासि । द्वितीयेन तु न तावद् व्यापकं व्याहन्यते, कवलाहारस्य हि व्यापकं शक्तिविशेषवशादुदरकन्दराकोणे क्षेप, स च सति सार्वज्ञ्ये सुतरां संभाव्यते, वीर्यान्तरायकर्मनिर्मूलोन्मूलनात्, तत्र तत्क्षेपहेतो शक्तिविशेषस्य संभवात् । कारणमपि बाह्यम्, आभ्यन्तरं वा विरोधमधिरोहेत् ? । बाह्यमपि कवलनीयं वस्तु, तदुपहारहेतुपात्रादिकम्, औदारिकशरीरं वा ? । न प्रथमम्, यतो यदि सर्ववेदिसवेदनं कवलनीयपुद्गलैर्विरोधधुरां धारयेत्, तदानीमस्मदादिसंवेदनमपि तथा स्यात्; न खलु तरुणतरतरणिकिरणनिकरेणाऽन्धकारनिकुरम्बं विरुद्धं प्रदीपालोकेनाऽपि न तथा भवति, तथा च करतलतुलिताहारगोचरज्ञानोत्पादेऽस्मदादीनामपि तदभावो भवेत्, इत्यहो ! किमपि नूतनतत्त्वालोककौशलम्, यदात्मन्यपि नाहारापेक्षा, अस्मदादौ तयोर्विरोधावबोध एव हि तत्र तत्प्रतिपत्तावुपाय, तस्याऽस्मदादीनामगोचरत्वात्, यथाऽस्मदादौ ज्ञानतारतम्यावबोधस्तस्य नि शेषविषयत्वस्य प्रतिपत्ताविति । पात्रादिपक्षोऽपि नाऽक्षूण, भगवतामर्हतां पाणिपात्रत्वात् । इतरेषामपि केवलिनां

स्वरूपमात्रेण तत् तद्विरोधदुर्धरं स्यात्, ममकारकारणतया वा ? । तत्राद्यः समनन्तरपक्षप्रहारेणैवोपक्षीणः । द्वितीयोऽपि नास्ति, निर्मोहत्वेन तेषां तत्र ममकारविरहात् । न च पात्रादिभावे भवितव्यमेवानेनेत्यवश्यम्भावोऽस्ति, शरीरभावेऽपि तद्भावप्रसङ्गात्, इतरजनेषूभयभावेऽपि तद्दर्शनात् । औदारिकशरीरमपि न तेन विरोधमध्यूषिवत्, केवलोत्पत्तिसमनन्तरमेव तदभावापत्तेः । आभ्यन्तरमपि तत्कारणं शरीरम्, कर्म वा ? । न तावत् प्रथमं विरुध्यते, भुक्तिहेतोस्तैजसशरीरस्य सार्वज्ञ्येन सार्धं त्वयापि सत्त्वस्वीकारात् । कर्मापि घाति, अघाति वा ?। घात्यपि मोहरूपम्, इतरद् वा ? । इतरदपि ज्ञानदर्शनावरणे, अन्तरायो वा ? । नाद्यः, तयोर्ज्ञानदर्शनावरणमात्रचरितार्थत्वेन तत्कारणत्वानुपपत्तेः । नापि द्वितीयः, अन्तरायविलयस्यैव तत्कारणत्वात्, तस्य च साकल्येन केवलिनस्त्वयापि स्वीकारात् । मोहोऽपि बुभुक्षालक्षणस्तत्कारणम्, सामान्येन वा ?। प्रथमप्रकारे सर्वत्रापीय तत्कारणम्, अस्मदादावेव वा ? । प्राच्यः प्रमाणमुद्रादरिद्रः । अथ या चेतनक्रिया सेच्छापूर्विकैव, यथा संप्रतिपन्ना, तथा च भुजिक्रिया, इत्यस्ति प्रमाणम्, तथाहि—प्रथमं प्रमाता प्रमिणोति, ततः इच्छति, अनन्तरं यतते, ततोऽपि करोतीति । नैवम्, सुप्तमत्तमूर्छितादिक्रियाभिर्व्यभिचारात्, स्ववशचेतनक्रियेति सविशेषणहेतूपादानेऽपि केवलिगतगतिस्थितिनिषद्यादिक्रियाभिर्व्यभिचारात् । द्वितीये तु सिद्धसाध्यता स्मः, केवलिनि वेदनीयादिकारणिकाया भुक्तेः सिद्धत्वात् । न सामान्येनाऽपि मोहस्तत्कारणम्, एवं हि गतिस्थितिनिषद्यादीनामपि स एव कारणं स्यात्, तथा च केवलिनि मोहाभावात् तासामप्यभावो भवेदिति कुतस्तीर्थप्रवृत्तिः स्यात् ? । अथ गत्यादिकमैव तत्कारणम्, न मोहः, तर्हि वेदनीयादिकमैव कवलाहारकारणम्, न मोह इत्यपि प्रतिपद्यताम् । अथाघातिकर्म तत्कारणम्, किमाहारपर्याप्तिः, नामकर्मभेदः, वेदनीयं वा ? । न द्वयमप्येतत् प्रत्येकं तथा युक्तम्, तथाविधाहारपर्याप्तिनामकर्मोदये वेदनीयोदयप्रबलप्रज्वलदौदर्यज्वलनोपतप्यमानो हि पु-

मानाहारमाहारयति, एवं च समुदितं पुनरेतद् भवति तत्कारणम्, किन्तु न सार्वज्ञ्येन विरुध्यते, सर्वज्ञे त्वयाऽपि तदुपगमात् । अथ मोहसहकृतं तत् तत्कारणम् । तदसङ्गतम्, गत्यादिकर्मणामिवाऽस्यापि मोहसाहायकरहितस्यैव तत्र तत्कारित्वाविरोधात् । अथाशुभप्रकृतय एवैतस्य साहायकमपेक्षन्ते, नान्या गत्यादय., अशुभप्रकृतिश्चेयमसातवेदनीयरूपेति चेत् । तत्किमियं परिभाषा ? । अस्मदादौ तथादर्शनादेवं कल्प्यत इति चेत् । ननु शुभप्रकृतयोऽप्यस्मदादौ मोहसहकृता एव स्वकार्यकारणकौशलमवलम्बमाना विलोकयाञ्चक्रिरे, ततस्ता अपि तथा स्यु, ततो नैतद्द्वयस्य मोहापेक्षस्य तत्कारणत्वम्, किन्तु स्वतन्त्रस्य, तच्च केवलिन्यविकलमस्त्येव । तन्न कारणं केवलित्वेन विरुध्यते । कार्यं तु यदि विरुद्धम्, तदा तत् तत्र मोत्पादि । अविकलकारणस्तु तत्रोत्पद्यमान कवलाहारोऽनिवार्य एव । किञ्च, किं नामाहारकार्यं सार्वज्ञ्येन व्याहन्यते-रसनेन्द्रियोद्भवं मतिज्ञानम्, ध्यानविघ्न, परोपकारकरणान्तराय, विसूचिकादिव्याधि, ईर्यापथ, पुरीषादिजुगुप्सितं कर्म, धातूपचयादिना रिरंसा, निद्रा वा ? । नाद्य पक्ष, तावन्मात्रेण रसनेन्द्रियज्ञानासम्भवात्, अन्यथाऽमरनिकरनिरन्तरनिर्मुक्तकुसुमपरिमलादिसबन्धाद् घ्राणेन्द्रियज्ञानमपि भवेत् । न द्वितीय, केवलिन शैलेशीप्रारम्भात् प्राग् ध्यानानभ्युपगमात्, तत्र च कवलाहारास्वीकारात्, तद्ध्यानस्य च शाश्वतत्वात्, अन्यथा गच्छतोऽपि कथ नैतद्विघ्न स्यात् ? । न तृतीय., तृयीययाममुहूर्तमात्र एव भगवतां भुक्ते[1], शेषमशेषकालमुपकारावसराद् । न चतुर्थ, परिज्ञाय हितमिताहाराभ्यवहारात् । न पञ्चम, गमनादिनाऽपीर्यापथप्रसङ्गात् । न षष्ठ, यतस्तस्मिन् क्रियमाणे तस्यैव जुगुप्सा सपद्येत, अन्येषां वा ? । न तावत् तस्यैव भगवत, निर्मोहत्वेन जुगुप्साया असम्भवात् । अथाऽन्येषाम्, तत् किं मनुजदनुजामरेन्द्रतद्रमणीसहस्रसङ्कुलायां सभायामनशुके भगवत्यासीने सा तेषां न संजायते[2] ? ।

---

१ तत्कार्यमित्यपि पाठान्तरम् । २ तेनेत्यपि पाठान्तरम् ।

अथ भगवतः सातिशयत्वाद् न तन्नाग्न्यं तेषां तद्धेतुः, तर्हि तत एव तन्नीहारस्य मांसचक्षुषामदृश्यत्वाद् न दोषः। सामान्यकेवलिभिस्तु विविक्तदेशे तत्करणाद् दोषाभावः। नापि सप्तमाष्टमौ, रिरंसानिद्रयोर्मोहनीयकार्यत्वात्, भगवति तु तदभावात्। तन्न कार्यमपि तस्य तेन विरुध्यते। नापि सहचरादि, यतस्तत्सहचरं छद्मस्थत्वम्, अन्यद् वा निगदेत्?। न तावदाद्यम्, उभयवाद्यविवादास्पदत्वेनासिद्धेः, अस्मदादौ तथादर्शनात्, तत्साहचर्यनियमोपगमे गमनादेरपि तत् सहचरं स्यात्। अन्यत्तु करवक्त्रचालनादि भवति तत्सहचरम्, न तु केवलित्वेन विरुद्धम्। एवमुत्तरचरादिकमपि न केवलित्वेन विरुध्यते। इति स्थितं कवलाहारसर्वज्ञत्वयोरविरोधादिति हेतुः सिद्धिवधूसंबन्धबन्धुर इति॥ २७॥

इति प्रमाणनयतत्त्वालोकालङ्कारे श्रीरत्नप्रभाचार्यविरचितायां रत्नाकरावतारिकाख्यलघुटीकायां प्रत्यक्षस्वरूपनिर्णयो नाम द्वितीयः परिच्छेदः॥



अर्हम्

# प्रस्तावना ।

कः खल्वार्हततत्त्वाभियुक्तः, तार्किकचक्रचक्रवर्तित्वेन, प्रतिवादिभयङ्करत्वेन च सुविश्रुतानां मूलग्रन्थमेत प्रणेतॄणां वादिश्रीदेवसूरीणां सुविहित-सुगृहीतेन नामधेयेन नास्त्यत्यन्तं परिचितः ? । एतेषां जन्म विक्रमार्काद् वह्नि-वेद-चन्द्र-भूमिप्रमिते (११४३) वर्षे[1] गूर्जरदेशान्तर्गते मड्डाहृतनाम्नि नगरे प्राग्वाटवंशमुक्तोपमस्य वीरनागाह्वयस्य[2] श्रेष्ठिनो जिनदेवीनाम्न्या गृहिण्याः कुक्षौ समजनिष्ट । प्रददे चैषां पितृभ्यां पूर्णचन्द्र इति नाम । पूर्वपुण्योदयवशेन निसर्गत एव संसाराद् विरक्तचित्तैस्तैः, परित्यज्य मोहसाम्राज्यशालिनीं वैभविकीं मूर्च्छा, श्रीमन्मुनिचन्द्रसूरीणां समीपे विक्रमादित्याद् द्विपञ्चैकेन्दुसंख्ये[3](११५२) संवत्सरे आर्हती दीक्षा प्रतिपेदे । समतिष्ठिपंश्च दीक्षासमये गुरवस्तेषां रामचन्द्र इति नाम । स्तोकेनैव कालेनाऽचिन्त्यप्रतिभाप्रकर्षवशतस्तैः समभ्यस्य सर्वविषयाणि शास्त्राणि, सम्प्राप्य वादविद्यायां परां काष्ठां, विहृत्य चानेकेषु देशेषु, महतीषु सभासु, पराजयं लम्भिता नानाविधाः प्रतिवादिविशारदा, यत्प्रभावकचरित्रे तच्चरित्रप्रतिपादनपरे एकविंशे शृङ्गे—

---

१ "शिखिवेदशिवे जन्म" इति प्रभावकचरित्रे । २ यत्तु निर्णयसागरमुद्रितस्य प्रमाणनयतत्त्वालोकालङ्कारभाषानुवादपुस्तकस्य प्रस्तावनाया देवसूरिपितुर्नाम 'नागदेव' इति व्यलेखि, तच्चिन्त्यम्,

"सद्वृत्तो जीवनच्छायो राजमान स्वतेजसा ।
प्राग्वाटवंशमुक्ताऽऽसीद् वीरनागाभिधो गृही" ॥ ७ ॥

इति श्रीप्रभावकचरित्रे स्पष्टं 'वीरनाग' इत्युल्लेखात् ।

३ "दीक्षा युग्मशरेश्वरे" इति प्रभावकचरित्रे ।

"शिवाद्वैत वदन् बन्ध पुरे धवलके द्विज ।
काश्मीरसागरो जिग्ये वादात् सत्यपुरे पुरे ॥ ३९ ॥
तथा नागपुरे क्षुण्णो गुणचन्द्रो दिगम्बर ।
चित्रकूटे भागवत शिवभूत्याख्यया पुन ॥ ४० ॥
गङ्गाधरो गोपगिरौ धरायां धरणीधर ।
पद्माकरो द्विज पुष्करिण्यां च वाग्मदोद्धुर ॥ ४१ ॥
जितश्च श्रीभृगुक्षेत्रे कृष्णाख्यो ब्राह्मणाग्रणी ।
एवं वादजयोन्मुद्रो रामचन्द्र. क्षितावभूत्" ॥ ४२ ॥

एवं च विश्वस्मिन्नपि विश्वे वादिमतङ्गजशार्दूलत्वेन परां प्रसिद्धिं समासादितवतस्तान् सुयोग्यतयाऽतिप्रसन्नचित्ता गुरवो 'देवसूरि' इति नामदानपूर्वकं विक्रमात् ११७४ वर्षे सूरिपदे न्यवीविशन्[२]।

एभिर्वादिप्रवरैरणहिल्लपुरपत्तने श्रीसिद्धराजजयसिंहक्षितिपतेर्नानाशास्त्रविशारदैरनेकैः प्रामाणिकप्रकाण्डैर्मण्डितायां चतुरङ्गाया परिषदि तर्ककर्कशैरनल्पैर्विकल्पकल्पनाजालैः पराभूतिं प्रापितश्चतुरशीतौ सभासु लब्धजयप्रतिष्ठोऽपि कुमुदचन्द्रनामा दिगम्बराचार्यः, समर्थितश्च सयुक्तिसूक्तिकं नारीनिर्वाणविधिः, प्रभावमापादितं श्वेताम्बरं शासनम्, समुत्तम्भितश्च स्वकीयो विमलो यशःस्तम्भः । तदानी च सभामध्यमध्यासीनैरन्यगच्छीयैरपि बहुभिर्जगद्विख्यातैः श्रीमद्धेमचन्द्राचार्यप्रभृतिभिः सूरिभिः, अप्रतिबध्नद्भिर्निजं कवित्वकौशलं, परां स्तुतिमुपनीता

१ "श्रीदेवसूरिरपरश्च जगत्प्रसिद्धो वादीश्वरोऽस्तगुणचन्द्रमदोऽपि बाल्ये" इति गुर्वावल्या श्रीमुनिसुन्दरसूरयोऽपि ।

२ "वेदाश्वशङ्करे वर्षे सूरित्वमभवत् प्रभो" इति प्रभावकचरित्रे ।

३ "शरवेदेश्वरे वर्षे कार्तिके पूर्णिमानिशि ।
जन्माऽभवत्प्रभोर्व्योमबाणशम्भौ व्रतं तथा" ॥ ८४८ ॥

इति प्रभावकचरित्रे श्रीहेमचन्द्राचार्यप्रबन्धगतश्लोकेन हेमचन्द्राचार्याणा वादिश्रीदेवसूरिसमानकालिकत्वं सुप्रतीतम् ।

वादीन्द्रा श्रीदेवसूरिपादा[1], तथा च प्रभावकचरित्रे—

"श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासने ।
सूत्रधार. प्रभु. श्रीमान् हेमचन्द्रप्रभुर्जगौ" ॥ २५० ॥

तथाहि—

यदि नाम कुमुदचन्द्र नाजेष्यद् देवसूरिरहिमरुचि. ।
कटिपरिधानमधास्यत कतम श्वेताम्बरो जगति ? ॥२५१॥
श्रीचन्द्रसूरयस्तत्र सिद्धान्तस्येव मूर्तय ।
शासनोद्धारकूर्मायाऽशासन् श्रीदेवसूरये ॥ २५२ ॥
श्रीमद्देवगुरौ सिंहासनस्थे सति भास्वति ।
प्रतिष्ठायां न लग्नानि वृत्तानि महतामपि " ॥ ॥ २५३ ॥

अपरैरपि तत्समानकालिकैः, पश्चाद्भाविभिश्च भूरिभि सूरिभि-र्वादिवर्याणां जयश्रीसमागमस्य, चातुर्वैद्यवैशारद्यस्य, माहात्म्योत्कीर्तनस्य, सत्तासमयाद्युपवर्णनस्य च तत्तद्ग्रन्थेषु विहित संवाद सुस्पष्टं लोचनगोचरीभवति, तथाहि—

" यैरत्र स्वप्रभया दिगम्बरस्याऽर्पिता पराभूति ।
प्रत्यक्ष विबुधानां जयन्ति ते देवसूरयो नव्या " ॥ (पृष्ठ १)

"आशावास समयसमिधा संचयैश्चीयमाने
स्त्रीनिर्वाणोचितशुचिवचश्चातुरीचित्रभानौ ।
प्राजापत्य प्रथयति तथा सिद्धराजे, जयश्री-
र्यस्योद्वाह व्यधित स सदा नन्दताद् देवसूरि " ॥ (पृष्ठ १८६)

( रत्नाकरावतारिकायां श्रीरत्नप्रभसूरयः )

"शिष्य· श्रीमुनिचन्द्रसूरिमुनिभिर्गीतार्थचूडामणि.
पट्टे स्वे विनिवेशितस्तदनु स श्रीदेवसूरिप्रभु. ।
आस्थाने जयसिंहदेवनृपतेर्येनाऽस्तादिग्वाससा
स्त्रीनिर्वाणसमर्थनेन विजयस्तम्भ समुत्तम्भितः " ॥

( उपदेशमालाटीकाप्रशस्तौ रत्नप्रभसूरयः )

---

१ एतान्निर्माणकालस्तु ग्रन्थकर्तृभिस्तत्रैव " विक्रमाद् वसुलोकार्कवर्षे माघे समर्थिता" इत्यनेन प्रतिपादित ।

"अनन्यसाधारणशीलसंपदे विनम्रविद्वज्जनमुद्रिताऽऽपदे ।
दिगम्बराडम्बरभङ्गसूरये प्रणम्य तस्मै गुरुदेवसूरये" ॥ २ ॥

"श्रीदेवसूरिसुगुरो स्फुटनाममन्त्रनित्यस्मृतिस्तदुपदेशवशेन वृत्तिम् ।
श्रीमन्मुनीन्द्रमुनिचन्द्रकृतावमुष्यां सूरिर्महेश्वर इति प्रकटा चकार" ॥१॥

(आवश्यकसप्ततिटीकायां श्रीमहेश्वराचार्याः)

"श्रीदेवसूरिप्रमुखा बभूवुरन्येऽपि तत्पादपयोजहंसाः ।
येषामबाधारचितस्थितीनां नालीकमैत्री मुदमाततान" ॥

(जिन[1]धर्मप्रतिबोधे श्रीसोमप्रभसूरयः)

"भेजेऽवकीर्णतां नग्नः कीर्तिकन्थामुपार्जयन् ।
तां देवसूरिराच्छिद्य तं निर्ग्रन्थं पुनर्व्यधात्" ॥ १ ॥

(श्री[2]उदयप्रभदेवाः)

"स[3] श्रीकरीसप्तकवादिदेवाचार्यस्य शिष्योऽजनि रामचन्द्रः ।
सूरिर्विनेयो जयमङ्गलोऽस्य प्रशस्तिमेतां सुकृती व्यधत्त" ॥

"वस्त्रप्रतिष्ठाचार्याय नमः श्रीदेवसूरये ।
यत्प्रसादमिवाऽऽख्याति सुखप्रश्नेषु दर्शनम्" ॥

(स[4]मरादित्यसंक्षेपे श्रीप्रद्युम्नाचार्याः)

"वादविद्यावतोऽद्यापि लेखशालामनुज्झता ।
देवसूरिप्रभोः साम्यं कथं स्याद् देवसूरिणा ?" ॥

"बार्हस्पत्याधिपत्यस्य पातने प्रथितोद्यमः ।
अपूर्वः कोऽपि लोकेऽस्मिन् देवसूरिः कृतोदयः" ॥

---

१ एतद्ग्रन्थविरचनसमयः —

"शशि-जलधि-सूर्यवर्षे शुचिमासे रविदिनसिताष्टम्याम् ।
जिनधर्मप्रतिबोधः क्लृप्तोऽयं गूर्जरेन्द्रपुरे" ॥ १४ ॥

इति प्रशस्तिप्रान्तभागे ग्रन्थकर्तृभिः स्वयमेवोदटङ्कि ।

२ स्याद्वादमञ्जरीप्रणेतॄणां श्रीमल्लिषेणसूरीणां गुरवः, धर्माभ्युदयमहाकाव्यादिविनिर्मातारश्च ।

3 Epigraphia Indica Vol ix p 79

४ "वर्षे वारिधिपक्षयक्षगणिते श्रीवर्धमानस्थितिश्चक्रेऽमुं" इत्येतत्प्रशस्तिप्रान्तभागोल्लेखेन ग्रन्थस्याऽस्य निर्माणाऽवसरो विक्रमार्कसंवत् १३२४ रूपः प्रतीयते ।

श्रीजैनशासनसरोजविकाशभानु श्रीदेवसूरिरिति तस्य बभूव शिष्य ।
दुर्वादिकौशिकवयप्रतिभाद्दगान्ध्यं यावन्मरीचिनिचयै रचयांचकार ॥
येषां दूरीकृतया कीर्त्या वलयापि कुमुदचन्द्रस्य ।
विदधे विजयस्तज्जयमहिमा को नाम तेषा स्यात् ? ” ॥
(शान्तिनाथचरित्रे श्रीमुनिदेवसूरय )

“वादिश्रीदेवसूरेर्गणगगनविधोर्बिभ्रता शारदाया
नाम प्रत्यक्षपूर्वं सुजयपदभृतो मङ्गलाह्वस्य सूरे ।
पादद्वन्द्वारविन्दे बुधमधुपहिते भृङ्गभृङ्गिं दधानो
वृत्ति सोमोऽभिरामामकृत कृतिमता वृत्तरत्नाकरस्य” ॥
(वृत्तरत्नाकरटीकाया श्रीसोमचन्द्रपण्डिता )

“नग्नो यत्प्रतिभाघर्मात् कीर्तियोगपट त्यजन् ।
ह्रियेवाऽत्याजि भारत्या देवसूरिर्मुदेऽस्तु व ॥ १ ॥
सत्रागारमशेषकेवलभृता भुक्ति तथाऽस्थापय-
न्नारीणामपि मोक्षतीर्थमभवत् तद्युक्तियुक्तोत्तरै ।
य श्वेताम्बरशासनस्य विजिते नग्ने प्रतिष्ठागुरु-
स्तद्देवाद् गुरुतोऽप्यमेयमहिमा श्रीदेवसूरिप्रभु ” ॥ २ ॥
( प्रबन्धचिन्तामणौ श्रीमेरुतुङ्गाचार्या )

“अतिष्ठिपन् निर्वृतिमङ्गनाजने विजित्य ये दिक्पटमागमोक्तिभि. ।
विवादविद्याविदुरं वदावदा जयन्ति तेऽमी प्रभुदेवसूरय ”(पृ० २)
“सिताम्बराणामपि यैश्च दर्शनं स्थिरं कृत गूर्जरभूमिमण्डले ।
चलाचलं दिक्पटवादवात्यया मनोमुदे ते मम देवसूरय ” ॥ (“)

---

१ अयं ग्रन्थो विक्रमार्कात् १३२९ वर्षे पण्डितैर्निर्मित , यत्त एव ग्रन्थान्त-भागे—

“श्रीविक्रमनृपकाले नन्द-कर कृपीटयोनि शशिसंख्ये ।
समजनि रजोत्सवदिने वृत्तिरियं मुग्धबोधकरी” ॥ ४ ॥

२ “एतद्ग्रन्थानिर्माणसमय
“त्रयोदशस्वब्दशतेषु चैकषष्टयाधिकेषु क्रमतो गतेषु ।
वैशाखमासस्य च पूर्णिमाया ग्रन्थ समाप्तिं गमितो मितोऽयम्”॥
इति पद्यमुपन्यस्यद्भिर्ग्रन्थकर्तृभिरेव प्रत्यपादि ।

"तत्पट्टाचलपूर्वपर्वतशिर शृङ्गारतिग्मद्युति·
स्फूर्जत्कौमुदचन्द्रधामनिहतिप्रख्यातकीर्तिव्रज· ।
तापव्यापदपाकृतिप्रमुदितैरासेव्यमानो भृश
सच्चक्रै सततं चिर स जयति श्रीदेवसूरिप्रभु " ॥ (पृष्ठ-३५३)

(शान्तिनाथमहाकाव्ये श्रीमुनिभद्रसूरय )

"तस्याऽभवन्नजितदेवमुनीन्द्रवादिश्रीदेवसूरिवृषभप्रमुखा विनेया "॥२४॥

( क्रियारत्नसमुच्चये श्रीगुणरत्नसूरय )

"अष्टहयेशमितेऽब्दे विक्रमकालाद् दिव गतो भगवान् ।
श्रीमुनिचन्द्रमुनीन्द्रो ददातु भद्राणि सङ्घाय ॥ ७२ ॥
तस्मादभूदजितदेवगुरुर्गरीयान् प्राच्यस्तप श्रुतनिधिर्जलधिर्गुणानाम् ।
श्रीदेवसूरिरपरश्च जगत्प्रसिद्धो वादीश्वरोऽस्तगुणचन्द्रमदोऽपि बाल्ये ॥७३॥
येनार्दितश्चतुरशीतिसुवादिलीलालब्धोल्लसज्जयरमामदकेलिशाली ।
वादाहवे कुमुदचन्द्रदिगम्बरेन्द्र श्रीसिद्धभूमिपतिसंसदि पत्तनेऽस्मिन्॥७४॥
वेदमुनीशमितेऽब्दे देवगुरुर्जगदनुत्तरोऽभ्युदित "

( गुर्वावल्यां श्रीमुनिसुन्दरसूरय )

---

१ श्रीयशोविजयजैनग्रन्थमालाया मुद्रितम् । एतद्ग्रन्थनिर्माणकालप्रतिपादनपरं तत्रस्थमिद पद्यम्—

"अन्तरिक्ष–रजनीहृदीश्वर–ब्रह्मवक्त्र–शशिसख्यवत्सरे ।
वैक्रमे शुचितपोजयातिथौ शान्तिनाथचरित व्यरच्यत" ॥१७॥

२ श्रीयशोविजयजैनग्रन्थमालाया प्रसिद्धिमानीतोऽयं ग्रन्थ । इदंग्रन्थप्रणयननिर्णयनाय—

"काले षड्–रस–पूर्ववत्सरमिते श्रीविक्रमार्काद् गते
गुर्वादेशवशाद् विमृश्य च सदा स्वान्योपकार परम् ।
ग्रन्थं श्रीगुणरत्नसूरिरतनोत् प्रज्ञाविहीनोऽप्यमुं
निर्हेतूपकृतिप्रधानजननै शोध्यस्त्वय धीधनै ॥ ६३ ॥

इति तत्प्रशस्तिप्रान्तभागे स्थितोऽयं श्लोक एव पर्याप्त ।

३ श्रीयशोविजयजैनग्रन्थमालाया प्राकाश्यं प्रापितोऽयं ग्रन्थ । एतद्विधानसमयमिममुल्लिखन्ति ग्रन्थकारा –

" रस-रस-मनुमितवर्षे मुनिसुन्दरसूरिणा कृता पूर्वम् ।
मध्यस्थैरवधार्या गुर्वालीयं जयश्रीदा " ॥

" श्रीमुनिचन्द्रसूरिशिष्या श्रीअजितदेवसूरिवादिदेवसूरिप्रभृतय. । तत्र वादिश्रीदेवसूरिभि श्रीमदणहिल्लपुरपत्तने जयसिहदेवराजस्याऽनेकविद्वज्जनकलिताया सभाया चतुरशीतिवादलब्धजययशसं दिगम्बरचक्रवर्तिन वादलिप्सुं कुमुदचन्द्राचार्यं वादे निर्जित्य श्रीपत्तने दिगम्बरप्रवेशो निवारितोऽद्यापि प्रतीत । तथा वि०चतुरधिकद्वादशशत(१२०४)वर्षे फलवर्द्धिग्रामे चैत्यबिम्बयो. प्रतिष्ठा कृता, तत्तीर्थं तु सम्प्रत्यपि प्रसिद्धम् । तथा आरासणे च श्रीनेमिनाथप्रतिष्ठा कृता। चतुरशीतिसहस्र(८४०००)प्रमाण स्याद्वादरत्नाकरनामा प्रमाणग्रन्थ कृत । येभ्यश्च यन्नाम्नैव ख्यातिमच्चतुर्विंशतिसूरिशाख बभूव । एषां च वि० चतुस्त्रिशदधिके एकादशशत(११३४)वर्षे जन्म, द्विपञ्चाशदधिके(११५२)दीक्षा। चतु सप्तत्यधिके(११७४)सूरिपदम्। षड्विंशत्यधिकद्वादशशत(१२२६)वर्षे श्रावणवादिसप्तम्या गुरौ स्वर्ग ॥

(तपागच्छपट्टावल्यां श्रीधर्मसागरोपाध्याया )

प्रतिपादितश्चैतेषां वादिपुङ्गवाना प्रपञ्चेन प्रबन्धो मुद्रितकुमुदचन्द्रप्रकरण–प्रभावकचरित्र–प्रबन्धचिन्तामण्यादिग्रन्थेषु पूर्वकालिकैस्तैस्तैर्विद्वद्वरैः, इति विशेषार्थिभ्यस्तत्रैव विलोकनार्थं विज्ञप्यते ।

एभिर्वादिकुलोत्तसै. प्रभातस्मरणकुलक–श्रीमुनिचन्द्रसूरिस्तुति–श्रावकधर्मकुलकादिव्यतिरिक्तोऽस्यैव ग्रन्थस्य विस्तरेणार्थप्रतिपादनपरश्चतुरशीतिसहस्रश्लोकप्रमितः स्याद्वादरत्नाकराख्यो यथार्थनामा प्रमाणग्रन्थोऽपि निरमायि[2], यस्य परिचयार्थं महत्त्वपूर्णत्व सकलतर्कग्रन्थमौलिमुकुटत्व च परिचाययितु—

"इह हि लक्ष्यमाणाऽक्षोदीयोऽर्थाक्षूणाक्षरक्षीरनिरन्तरे, तत इतो दृश्यमान-

१ श्रीयशोविजयग्रन्थमालाया मुद्रितमिद प्रकरणम् ।

२ यत् स्याद्वादरत्नाकरे प्रथमपरिच्छेदपर्यवसाने वादिवर्या —

" इति सकलतार्किक-वैयाकरण-सैद्धान्तिक सहृदय-कविचक्रचक्रवर्ति– चारित्रचूडामणि सुविहितसुगृहीतनामधेयश्वेताम्बराधिपश्रीमन्मुनिचन्द्रसूरिचरणसरसीरुहोपजीविना श्रीदेवाचार्येण विरचिते स्याद्वादरत्नाकरे प्रमाणनयतत्त्वालोकालङ्कारे प्रमाणस्वरूपनिर्णयो नाम प्रथम परिच्छेद ।

स्याद्वादमहामुद्रामुद्रितानिद्रप्रमेयसहस्रोत्तुङ्गरङ्गत्तरङ्गभाङ्गिसङ्गसौभाग्यभाजने, अतुलफलभरभ्राजिष्णुभूयिष्ठागमाभिरामातुच्छपरिच्छेदसदोहशाद्वलासन्नकानन-निकुञ्जे, निरुपममनीषामहायानपात्रव्यापारपरायणपुरुषप्राप्यमाणाऽप्राप्तपूर्वरत्न-विशेषे, क्वचन वचनरचनानवद्यगद्यपरम्पराप्रवालजालजटिले, क्वचन सुकुमारका-न्तालोकनीयास्तोकश्लोकमौक्तिकप्रकरकरम्बिते, क्वचिदनेकान्तवादोपकल्पिताऽ-नल्पविकल्पकल्लोलोल्लासितोद्दामदूषणाद्रिविद्राव्यमाणानेकतीर्थिकनक्रचक्रचक्रवा-ले, क्वचिदपगताशेषदोषाऽनुमानाभिधानोद्वर्तमानासमानपाठीनपुच्छच्छटाच्छो-टनोच्छलदतुच्छशीकरश्लेषसजायमानमार्तण्डमण्डलप्रचण्डच्छमत्कारे, क्वापि ती-र्थिकग्रन्थग्रन्थिसार्थसमर्थकदर्थनोपस्थापितार्थानवस्थितप्रदीपायमानप्लवमानज्व-लन्मणिफणीन्द्रभीषणे, सहृदय–सैद्धान्तिक–तार्किक–वैयाकरण–कविचक्रचक्रव-र्तिसुविहितसुगृहीतनामधेयाऽस्मद्गुरुश्रीदेवसूरिभिर्विरचिते स्याद्वादरत्नाकरे-"

"प्रभूत चात्र वक्तव्यं तच्चोक्तमेव बृहद्वृत्तौ वितत्य श्रीपूज्यै"

"एतदत्र विततीक्रियमाण प्रस्तुतेतरदिव प्रतिभाति ।
विस्तराय च भवेदिति चिन्त्यं तद् विलोक्य गुरुगुम्फितवृत्तिम्" ।

"आक्षेपश्च समाधिश्च ज्ञेयौ रत्नाकरादिह" ।

"भङ्ग कथात्रयस्याऽत्र निग्रहस्थाननिर्णय ।
श्रीमद्रत्नाकरग्रन्थाद् धीधनैरवधार्यताम् ॥

यतः—
प्रमेयरत्नकोटीभि पूर्णो रत्नाकरो महान्" ।

( रत्नाकरावतारिका )

"स्याद्वादरत्नाकरतर्कवेधा मुदे स केषां न हि देवसूरि ?" ।

( गुर्वावली )

"स्याद्वादरत्नाकर इत्यस्ति तर्को महत्तम ।
वादिवृन्दारकश्रीमद्देवसूरिविनिर्मित" ॥ १ ॥

( रत्नाकरावतारिकापञ्जिका )

"कान्ताननेकान्तमतावलम्बिनः स्याद्वादरत्नाकरवाङ्मयादिकान्" ।

( विजयप्रशस्तिमहाकाव्ये )

"स्याद्वादरत्नाकरनामा, अणहिल्लपुरपत्तने श्रीसिद्धराजजयसिंहदेवप्रमुख-

महासभ्यसमक्षं कुमुदचन्द्राख्यदिगम्बराचार्येण सह विवादं कुर्वाणैर्लब्धजय-वादैर्वादिश्रीदेवसूरिपादै कृतश्चतुरशीतिसहस्रप्रमाण प्रमाणग्रन्थ ”।

( विजयप्रशस्तेरुपरितनश्लोकस्य टीका )

इत्यादय प्राकृतनैरनूचानैरुल्लेखिता उल्लेखा एवाऽलं भाविष्यन्ति, इति कृतमत्र बहुभाषितेनाऽस्माकम् । एतेनैतेषां वादिसिंहाना सर्व-शास्त्रविषयकं प्रौढपाण्डित्यं परमावधिमधिगतमित्यप्यास्माकीनं वक्तव्यं सामर्थ्यादेव निर्व्यूढ भवति ।

---

एतस्या रत्नाकरावतारिकाख्यायाष्टीकायास्तु विनिर्मातारस्तार्किक-मतल्लिका रत्नप्रभसूरयस्तेषामेव वादश्रेणिशिरोमणीनां शिष्योत्तसा समभूवन् , इति टीकाकृत स्वय स्वविरचितेषु तत्तद्ग्रन्थेषु प्रत्यपीपदन्; तथाच रत्नाकरावतारिकायाः प्रान्ते—

“ प्रज्ञात पदवेदिभि स्फुटदशा सभावितस्तार्किकै
कुर्वाण प्रमदाद् महाकविकथा सिद्धान्तमार्गाध्वग ।
दुर्वाद्यङ्कुशदेवसूरिचरणाम्भोजद्वयीषट्पद
श्रीरत्नप्रभसूरिरिल्पतरधीरेतां व्यधाद् वृत्तिकाम् ” ॥ ५ ॥

उपदेशमालाटीकायामपि—

“ पाय पायं प्रवचनसुधां प्रीयते या प्रकामं
स्वैर स्वैरं चरति कृतिनां कीर्तिवल्लीवनेषु ।
दोग्ध्री कामान् नवनवरसै , सा भृश प्रीणयन्ती
मादृग्वत्सान् जयति जगति श्रीगवी देवसूरे ” ॥

“ तत्पट्टप्रभवोऽभवन्नथ गुणग्रामाभिरामोदया
श्रीभद्रेश्वरसूरय शुचिधियस्तन्मानसप्रीतये ।
श्रीरत्नप्रभसूरिभि शुभकृते श्रीदेवसूरिप्रभो
शिष्यै सेयमकारि संमदकृते वृत्तिर्विशेषार्थिनाम् ” ॥

रत्नाकरावतारिकापञ्जिकायां श्रीराजशेखरसूरयश्च—

“ श्रीदेवसूरिशिष्येन्द्रै श्रीरत्नप्रभसूरिभि ।

तत्र टीका लघुश्चक्रे रत्नाकरावतारिका ” ॥

प्रबन्धचिन्तामण्या श्रीमेरुतुङ्गाचार्या अपि—

“अथ देवसूरिप्रभो रत्नप्रभाभिधान प्रथमशिष्य क्षपामुखे गुरुवेषतया कुमुदचन्द्रस्य गुरूदेरे गते ”।

एतेन य एव वादिवर्याणां समय. स एवैतेषां टीकाकृतामपि, इति नि.संशय प्रतीयते ।

अत्र ग्रन्थे मूलसूत्राणां स्फुटतरमर्थप्रकाशनम्, तत्र तत्र विप्रतिपन्नानामन्यदर्शनाना मतस्योपस्थापनम्, युक्तिततिभिर्जिनमताऽनुमतं तत्प्रतिविधानं च तादृश्या सहृदयहृदयहृदयङ्गमया लालित्यपूर्णया भाषापद्धत्या निर्वर्णितं, यादृशी विरलमेव तर्कग्रन्थेष्वन्येषूपलभ्यते ।

ग्रन्थस्याऽस्य दर्शनविषयकत्वेन स्वाभाविक काठिन्यं, तत्राऽपि प्रौढलेखसहकृतगभीराशयत्वेनाऽतिकृच्छ्रगम्यत्व च विज्ञाय तदर्थावबोधसहाये पण्डितश्रीज्ञानचन्द्रमलधारिश्रीराजशेखरसूरिभ्या टिप्पणपञ्जिके निरमायिषाताम्, ये अद्यापि विद्यमानतां बिभृतः ।

एते च टीकाकाराः शाब्दिकचेतश्चमत्कारचञ्चून् शब्दप्रयोगान् प्रयुञ्जानाः समसूसुचन् निजां व्याकरणपारदर्शिताम्, सुमनोमनोहरैरनवद्यै· पद्यैरेव संपूर्णमपि महीयासं चक्षु.प्राप्यकारितावाद समुपन्यस्यमाना आवीविदन्नात्मीयां साहित्यशास्त्रप्रवीणताम्, पुनः पुनः परावृत्तैस्त्रयोदशभिरेव वर्णैर्जगत्कर्तृत्वनिराकरण निर्मिमाणाश्च पर्यचीचयन् स्वयमेव स्वकीयमद्भुतास्पदं प्रतिभाप्रकर्षम्, इति ग्रन्थस्याऽस्य सम्-

१ एवं च ‘ वादिदेवसूरिणामेव शिष्या श्रीरत्नप्रभसूरय ’ इति प्रतिपादनपरेष्वनेकेषु निर्दोषेषु प्रमाणेषु सत्स्वपि, यदेतद्भाषानुवादपुस्तकप्रस्तावनाया केनापि श्रीरत्नप्रभसूरीणा गुरुत्वेन श्रीभद्रेश्वरसूरय उपन्यस्ता., तत्र विना तत्प्रस्तावकस्याऽज्ञता, किमन्यत्कारणमभिधातु शक्यते ? ।

लचूलं सुविचारं विलोकनेन विनिश्चेष्यन्ते विपश्चित', स्वयं श्रद्धास्यन्ते च टीकाकृद्भिर्ग्रन्थपर्यवसानप्रतिपादितमिद ग्रन्थमहत्त्वप्रदर्शक पद्यमपि—

“ वृत्ति पञ्च सहस्राणि येनेयं परिपठ्यते ।
भा-रती भारती चास्य प्रसर्पन्ति प्रजल्पत· ” ॥

श्रीमद्रत्नप्रभसूरिभिरन्येऽपि श्रीनेमिनाथचरित-उपदेशमालाटीका-मतपरीक्षापञ्चाशदादयो नानाविधा ग्रन्था अग्रन्थिषत, यैरपि तेषां विविधशास्त्रविचक्षणता, प्रतिभाप्राग्भराधिकारिता च बाढ प्रतीतिपथमवतरति ।

किञ्च, स्वय वादिपुङ्गवा अपि निजे स्याद्वादरत्नाकरे श्लोकमिम समुपन्यस्यन्तश्चित्ताकर्षकै शब्दै' श्रीरत्नप्रभसूरिभ्य' श्लाघन्ते—

“कि दुष्कर भवतु तत्र मम प्रबन्धे यत्रातिनिर्मलमति सततामियुक्त ।
भद्रेश्वर प्रवरसूक्तिसुधाप्रवाहो रत्नप्रभश्च भजते सहकारिभावम् ?” ॥१॥

एतन्मुद्रणावसरे यान्यादर्शपुस्तकानि येषा महात्मना सान्निध्यादुपलब्धानि, तानि, तेषा धन्यवादार्पणपूर्वकमुपकाराङ्गीकारसहकाराणि नामानि चात्रोल्लिख्यन्ते ।

१ पन्न्यासश्रीवीरविजयाना पुस्तकमेकं, शुद्ध, प्राचीनं, प्रान्ते एतदुल्लेखसमन्वित च—

“ संवत् १४९५ वर्षे ज्येष्ठशुक्ल ९ भृगुवासरे महं नारदलिखितम् ”

२ मुनिराजश्रीजयविजयानां पुस्तकमेकं शुद्ध, प्राचीनं च ।

३ भावनगरश्रीसघभाण्डागारस्य पुस्तकमेक शुद्धं, नातिप्राचीनम्, अन्तेऽक्षरैरेतै. सहकृत च—

“ संवत् १७०० वर्षे प्रथमचैत्रमासे कृष्णपक्षे ३ शनौ दिने ”

४ वाराणसेययतिवर्यश्रीनेमिचन्द्राणां पुस्तकमेक नवीन, शुद्ध च ।

एवं च पुस्तकचतुष्टयसाहाय्येन महता परिश्रमेण शोधितमुद्रिते

कैर्भैरवकान्तारे बकस्य प्रासादः कारितः । तत्रैका बकमूर्तिः कारिता, तत्र प्रत्यहं पूजा प्रवर्तिता, तथैको मनुष्यः कुमारिकाकृष्टनामपत्रिको नगराद् बहिः प्रेष्यते, तं राक्षसो भक्षयित्वा स्वस्थमनास्तिष्ठति । अस्मिन्नगरे एवं कालो याति, ममाद्य पत्री निर्गता, मम मृत्युः समागतः, अद्याहं द्रोणप्रमाणं शाल्योदनबलिं गृहीत्वा तत्र वने बकप्रासादे यास्यामि, स बको मां बलिसंयुक्तं भक्षयित्वा तृप्तो भविष्यति, ततः स्वस्थानं यास्यति, पश्चात् सकलोऽपि लोकः कार्यार्थी नगराद् बहिर्निर्गमिष्यति। हे मातः! कुन्ति! तन्निराशं निरालम्बमेतद् मम कुटुम्बं रोदिति, यथाऽऽश्रमद्रुमनाशे पक्षिणोऽप्याक्रन्दं कुर्वन्ति। हे मातः! किञ्चिदन्यद्, मां यदेषा ब्राह्मणी वक्ति, तदपि शृणु, यथा–हे नाथ! त्वां विना मम जीवितेन किम्? त्वां विनाऽपत्यमपि पराभवं लप्स्यते । अतोऽहमेव बकराक्षसान्तिके बलिं गृहीत्वा यास्यामि, त्वमत्रैव गृहे तिष्ठ, स्वस्यापत्यं पालय। एषाऽपि मम मानसे महती चिन्ता वर्तते । स राक्षसोऽपि स्त्रीभक्ष्यं नाङ्गीकरोति । अथ पञ्चवर्षीयः करधृतकण्ठो देवशर्मपुत्रोऽवादीत्–हे मातापितरौ! युवां गृहे तिष्ठतम्, अहमेकोऽप्यनया कम्बया सद्यो गत्वा राक्षसं हनिष्यामि, इति विप्रादीनां सरस्वतीं श्रुत्वा बाष्पाविलविलोचना कुन्ती सदयहृदया द्विजन्मानमवादीत्–भो विप्र! एते शौण्डीर्योपचिताः पञ्चापि मम सूनवो महावीरा वर्तन्ते, एषामन्यतमस्तव स्थाने गत्वा तं राक्षसं पापोपेतं हत्वा क्षेमेणैवात्र समेष्यति, त्वं स्वस्थो भव, चिन्तां मा विधेहि, तवैषा चिन्ता ममैव भवतु; इति कुन्तीवचन श्रुत्वा हसन् विप्रोऽवादीत्–न जानासि जगज्जैत्रं त्वमम्ब! बकविक्रमम्, तस्य बले सर्वेषां शोण्डीराणां बलं मज्जति, मार्तण्डमण्डले दीपतारकखद्योतादीनां तेज इव। हे मातः! कुन्ति! अहमेव बककीनाशदासतां यास्यामि, तवैते पञ्च पुत्राः विश्ववात्सल्यकारका-

**न्नेव तद्भेदाऽभेदनान्तरीयकः शबलवस्तुव्यवस्थाकारी सकलप्र- मात्रभ्रान्तसंवेदननिबन्धनः कथञ्चिन्निवृत्तिभावः सुयुक्तियुक्त इति त्यक्त्वा परोदित इति मात्सर्यं तत्त्वव्यवस्थाहेतुरित्याश्रित्य महागुणं भाव्यतामेष इति ॥**

यत एवमत एव घटपर्यायनिवृत्तौ सत्यां, कपालकालेऽपि तद्बुद्ध्या कपालबुद्ध्या, मृदनुभूयते । मृन्निवृत्तौ च सत्याम्, ऊर्ध्वादिपर्यायवन्नानुभूयेत, न हि मृन्निवृत्तावूर्ध्वादिपर्यायोऽनुभूयते, मृदनिवृत्तावपि सत्याम्, ऊर्ध्वादिनिवृत्तित एव कारणात्, तद्भेदासिद्धेर्मृद ऊर्ध्वादेर्भेदसिद्धि., इति चेत् । एतदाशङ्क्याह—**न, ऊर्ध्वादेः** पर्यायस्य, मृदः सकाशात्, सर्वथा भेदासिद्धे, असिद्धिश्च तत्स्वरूपाननुविद्धस्य मृत्स्वरूपाननुविद्धस्य, अनुपलम्भादूर्ध्वादिपर्यायस्य । पराभिप्रायमाह—**क्षीरोदकादिभिः** । आदिशब्दाद् मज्जितादौ गुडदध्यादिग्रह., व्यभिचारस्तेषामपीतरेतरस्वरूपाननुवेधेनानुपलम्भेऽपि भेदादिति चेत् । एतदाशङ्क्याह— **नेत्यादि** । न नैतदेवं, तेषा क्षीरोदकादीनां, पूर्वं सबन्धात्, पश्चाच्च हसादिविभागकरणेन, भेदेनापि सिद्धेः कारणात्, न चैवमिह भेदेनापि सिद्धि । दोषान्तरमाह— **भिन्नेत्यादिना** । भिन्नोपादानत्वेन च मृदूर्ध्वाकारयोरिति प्रक्रम, तन्निवृत्तावप्यूर्ध्वाकारनिवृत्तावपि सत्या, पृथग् मृद. सकाशात्, तद्विकारापत्तेश्च ऊर्ध्वादिविकारापत्तेश्च काष्ठभस्मवदिति । कपालाद्याकार एव तद्विकार ऊर्ध्वाद्याकारविकार काष्ठभस्मकल्प इति चेत् । एतदाशङ्क्याह—**न, तस्यापि** कपालाद्याकारस्य, मृद सकाशात्, सर्वथा भेदासिद्धेः । अत एव कथञ्चिदूर्ध्वादिनिवृत्तिर्न सर्वथा । कुत इत्याह— **तदात्मभूतोर्ध्वाद्यात्मभूतकपालाद्याकारानिवृत्तेः** । मृदोऽपि च निवृत्ति.,कथञ्चिदिति वर्तते, तथाविधोर्ध्वाद्यपृथग्भवनाऽऽत्मस्वभावनिवृत्ते , तदनिवृत्तौ तु तदपृथग्भवनायोग इति भावना । इत्येवम्, सर्वत्रैव पटादिदीर्घत्वादौ, तद्भेदाभेदनान्तरीयक , द्रव्यपर्यायभेदाभेदनान्तरीयक , कथञ्चिन्निवृत्तिभाव इति संबन्ध. । अयमेव विशिष्यते—**शबलवस्तुव्यवस्थाकारी** द्रव्यपर्यायश-

बलवस्तुव्यवस्थाकरणशीलः। पुनरपि विशिष्यते- **सकलेत्यादिना** । सकलप्रमातॄणामभ्रान्त यत्संवेदनं तन्निबन्धनस्तत्कारणभूतस्तद्व्यवस्थापितो वेति, कथञ्चिन्निवृत्तिभावोऽनन्तरनिर्दशितस्वरूप , अनुभवविरुद्धकुयुक्त्यपोहेन सुयुक्तियुक्त , इत्यस्माद्धेतो., त्यक्त्वा परोदितइत्येवनिबन्धनं मात्सर्यं, तथा, तत्त्वव्यवस्थाहेतु सर्वापरिकल्पितसिद्धे', इत्येवंनिबन्धनमाश्रित्य महागुणम् । किमित्याह- **भाव्यतामेष-कथञ्चिन्निवृत्तिभाव इति** ॥

**न चासौ कपालमृद् घटमृदः सर्वथाऽन्यैव, तदत्यन्तभेदे तस्या अमृत्त्वप्रसङ्गात्; यथोदकं न मृत्,ततोऽत्यन्तभेदाद्,एवमसावपि स्यात् , तस्याविशेषादिति। स्यादेतत् ,स्वभावेभ्यो व्यावृत्तत्वात् कपालपदार्थस्य मृत्स्वभावता, नोदकस्य, तेभ्यो व्यावृत्त्यभावात्। इत्यप्यसमीक्षिताभिधानम् , वस्तुनोऽसजातीयेतरव्यावृत्ताव्यावृत्तोभयस्वभावाऽऽपत्तेः, तथाहि-अमृत्स्वभावेभ्य एवोदकादिभ्यो व्यावृत्तिस्वभावः, एवं सति कपालपदार्थः स्यात्, न तु मृत्पिण्डशिवकघटादिभ्यो मृत्स्वभावेभ्योऽपि, तद्व्यावृत्तावमृत्स्वभावत्वप्रसङ्गात्; यथैवामृत्स्वभावेभ्यो व्यावृत्तः सन् मृत्स्वभावो भवति, एवं मृत्स्वभावेभ्योऽपि व्यावृत्तोऽमृत्स्वभावः स्यात्, न्यायानुगतमेतत्; अन्यथाऽमृत्स्वभावव्यावृत्तावपि मृत्स्वभावत्वानुपपत्तेः ॥**

आरेकान्तरनिरासायाह- **न चेत्यादि** । न चासौ कपालमृद् घटमृदः सकाशात् ,सर्वथाऽन्यैवाऽर्थान्तरभूतैव। कुत इत्याह- **तदन्त्यतभेदे** घटमृदोऽत्यन्तभेदेऽभ्युपगम्यमाने, तस्या कपालमृद , अमृत्त्वप्रसङ्गात्। कथमित्याह- **यथोदकं न मृत्** ततो घटमृद , अत्यन्तभेदात् , एवमसावपि कपालमृत् स्यात् अमृदेव। कुत इत्याह- **तस्य** अत्यन्तभेदस्य घटमृदा सह,अविशेषादिति। पराभिप्रायमाह- **स्यादेतदित्यादिना** । स्यादेतत्, अतत्स्वभावेभ्योऽमृत्स्वभावेभ्य उदकादिभ्य', व्यावृत्तत्वात् कारणात्, कपालपदार्थस्याधिकृतस्य, मृत्स्वभावता नोदकस्य मृत्स्वभा-

वता। कुत इत्याह-तेभ्यः अमृत्स्वभावेभ्य उदकादिभ्य एव, व्यावृत्त्यभावात्, न ह्युदकममृत्स्वभावेभ्यो व्यावृत्तममृत्त्वादेव, इत्येतदप्यसमीक्षिताभिधानं वर्तते। कुत इत्याह- वस्तुनः कपालमृदादे, असजातीयेतरेभ्यो व्यावृत्ताव्यावृत्ततयोभयस्वभावाऽऽपत्ते । एतदेव भावयति-तथाहीत्यादिना। तथाहीति पूर्ववत्। अमृत्स्वभावेभ्य एवोदकादिभ्य, आदिशब्दाद् दहनादिग्रह, व्यावृत्तस्वभावो भिन्नस्वभाव, एव सत्यतत्स्वभावव्यावृत्त्यभ्युपगमे सति, कपालपदार्थ. स्याद् न तु मृत्पिण्डशिवकघटादिभ्यो मृत्स्वभावेभ्योऽपि व्यावृत्तस्वभावः। कुत इत्याह-तद्व्यावृत्तौ यथोदितमृत्स्वभावव्यावृत्तौ सत्याम्, अमृत्स्वभावत्वप्रसङ्गात् कपालपदार्थस्येति प्रक्रम । एतद्भावनायैवाह- यथैवेत्यादि । यथैवामृत्स्वभावेभ्यो व्यावृत्त सन् कपालपदार्थ. मृत्स्वभावो भवति, एव मृत्स्वभावेभ्योऽपि व्यावृत्त. सन्न मृत्स्वभाव, स्याद् भवेत्, न्यायानुगतमेतत्, न्यायश्च यो यत्स्वभावेभ्यो व्यावर्तते नासौ तत्स्वभावो भवतीत्ययम्। इत्थं चैतदङ्गीकर्तव्यमित्याह- अन्यथेत्यादि । अन्यथैवमनभ्युपगमे। किमित्याह- अमृत्स्वभावव्यावृत्तावपि सत्या, प्रक्रमात् कपालपदार्थस्य मृत्स्वभावत्वानुपपत्ते, यो यत्स्वभावेभ्यो व्यावर्तते न स तत्स्वभाव एव भवतीति कृत्वा न्यायानुगतमेतदिति ॥

स्यादेतत्, वस्तुतः सजातीयेतरव्यावृत्तस्वरूपत्वात् प्रतिनियतैकस्वभावत्वात् सर्वभावानां यथोक्तदोषाभावः, तथा च यथैवासौ कपालभाव उदकादिभ्यो व्यावृत्तः सन् मृत्स्वभावः, एवं घटादिभ्योऽपि, तस्यैकस्वभावत्वात् तेनैव रूपेण व्यावृत्तत्वात्। इत्येतदप्ययुक्तम्, अनुभवविरुद्धत्वात्, तथाहि- यदि स येनैव स्वभावेनामृत्स्वभावेभ्यो व्यावृत्तस्तेनैव मृत्स्वभावेभ्योऽपि, हन्त! तर्हि यथैवामृत्स्वभावभावैकान्तविभिन्नावभासहेतुस्तथाव्यावृत्तेः, एवं मृत्स्वभावापेक्षयाऽपि स्यात्, तदत्यन्तविलक्षणबुद्धिजननस्वभावव्यावृत्त्यन्यथानुपपत्तेः, न च भवति, मृत्स्वभावस्य तत्रानुभूयमानत्वात्। प्रतिनियतैकस्वभावानुभवनिबन्धनाभ्युपगमे च

**पर्यायतः समानपरिणाम एवाभ्युपगत इति न काचिन्नो बाधेति। अतो न चासौ कपालमृद् घटमृदः सर्वथाऽन्यैव, तदत्यन्तभेदे तस्या अमृत्त्वप्रसङ्गादिति स्थितम् ॥**

पराभिप्रायमाह- **स्यादेतदित्यादिना**। स्यादेतत्, वस्तुत' परमार्थत, सजातीयेतरव्यावृत्तस्वरूपत्वात् कारणात्, प्रतिनियतैकस्वभावत्वात् सर्वभावाना कपालादीनाम्। किमित्याह- **यथोक्तदोषाभावः** अमृत्स्वभावव्यावृत्तावपि मृत्स्वभावत्वानुपपत्त्यवसानदोषाभाव। एतद्भावनायैवाह- **तथा चेत्यादि**। तथा च यथैवासौ कपालभाव-उदकादिभ्यो व्यावृत्त. सन् मृत्स्वभाव', एव घटादिभ्योऽपि व्यावृत्तो मृत्स्वभाव एव। कुत इत्याह- **तस्यैकस्वभावत्वात्** तेनैव एकस्वभावेन, रूपेण व्यावृत्तत्वादिति। एतदाशङ्क्याह- **एतदप्ययुक्तम्**। कुत इत्याह- **अनुभवविरुद्धत्वात्** कारणात्। एतदेव भावयति- **तथाहीत्यादिना**। तथाहीत्युपप्रदर्शने, यदि स कपालपदार्थः, येनैव स्वभावेनाऽमृत्स्वभावेभ्यो व्यावृत्त उदकादिभ्य, तेनैव मृत्स्वभावेभ्योऽपि मृत्पिण्डादिभ्य। एतदाशङ्क्याह- **हन्त! तर्हीति**, हन्तशब्दो विवादे, तर्ह्यक्षमायां, यथैव येनैव प्रकारेण, अमृत्स्वभावेभ्यो भावेभ्यउदकादिभ्य एकान्तविभिन्नावभासहेतुरसौ। कुत इत्याह- **तथा** तेन प्रकारेण व्यावर्त्यमानाऽत्यन्तविलक्षणबुद्धिजननस्वभावलक्षणेन, व्यावृत्ते कारणात्, एव मृत्स्वभावापेक्षयाऽपि स्यात्तदेकान्तविभिन्नावभासहेतुरेव। कुत इत्याह-**तदत्यन्तविलक्षणबुद्धिजननस्वभावव्यावृत्त्यन्यथाऽनुपपत्तेः**। व्यावर्त्यमानात्यन्तविलक्षणबुद्धिजननस्वभावेन व्यावृत्तेरन्यथाऽनुपपत्तेरिति। नच भवति तदेकान्तविभिन्नावभासहेतु। कुत इत्याह- **मृत्स्वभावस्य** तत्र कपालपदार्थे, अनुभूयमानत्वात् कारणात्। अथ ज्वरादिशमनौषधिनिदर्शनेन प्रतिनियत मृत्पिण्डादिषु तथैकस्वभावानुभवनिबन्धनं किञ्चिदिष्यते, इत्येतदाशङ्क्याह- **प्रतिनियतेत्यादि**। प्रतिनियत च तदेकस्वभावाऽनुभवनिबन्धन च तुल्यस्वभावानुभवकारणं चेति विग्रह, तस्याभ्युपगम., तस्मिन् सति, पर्यायतः पर्यायेण, समानपरिणाम एवाभ्युपगत. प्रतिनियतशब्देन,

इत्येवं, न काचिन्नोऽस्माकं, बाधेति । अतो नचासौ कपालमृद् घटमृद" सर्वथाऽन्यैव, तदत्यन्तभेदे तस्या अमृत्त्वप्रसङ्गात् । इति स्थित निगमनमेतत् पूर्ववत् ॥

तत्तन्मृत्त्वेनान्वयः साधयितुमिष्टः, एतच्च मृत्त्वमधिकृतघटमृद्दोऽत्यन्तभिन्नायामपि घटान्तरकपालमृदि विद्यत एवेति व्यभिचारि तत्कथं न बाधेति ?। अत्रोच्यते-- अधिकृतघटमृद एव स्वकपालमृत्त्वात् एकवस्तुसन्तानत्वात्, सतः सर्वथा असत्त्वानापत्तेः,तदुत्पत्त्यादिदोषप्रसङ्गात् ;इति नैवासौ कपालमृद् घटमृदः सर्वथाऽन्यैव, तस्या एव तथाभावात्, अन्यथाऽबीजत्वेन कपालानुपपत्तेः, असत एव सत्तायोगादतिप्रसङ्गादिति । न चैवं घटान्तरकपालमृदधिकृतघटमृदात्मिका, अतत्पूर्विकत्वात्, सदन्तरस्य सदन्तरत्वविरोधात्,तद्भावेनेतरोच्छेदाऽऽपत्तेः, तद्वदितरस्यातदुपादानत्वप्रसङ्गात्, अहेतुकत्वाऽऽपत्तेः, युक्त्यनुभवविरोधात् ; मृत्समानपरिणामा तु भवति, तथाप्रतीतेः । न चैतावदन्वयलक्षणम्, अपि त्वनेकस्वभावे वस्तुनि तत्तन्मृत्त्वम्, एतच्च तद्रूपशक्तिपरिणामादिसङ्गतं तत्तथाभावाध्यवसायहेतुरविगानप्रतीयमानं विशिष्टमेव, इति नात्यन्तभिन्नायां मृदि वर्तत इति बाधाभावः ॥

पराभिप्रायमाह- तत्तन्मृत्त्वेनेत्यादिना । तस्या विवक्षितकपालमृद ,तन्मृत्त्वमधिकृतघटमृत्त्वं तत्तन्मृत्त्व,तेन तस्या एव तथाभावेनेत्यर्थः, अन्वय साधयितुमिष्टो जैनस्य, मृत्त्वमत्र साधनम्,तन्मृत्त्वं तु साध्यम्, एतच्च मृत्त्वम्, अधिकृतघटमृद सकाशात्,अत्यन्तभिन्नायामपि। कस्यामित्याह–घटान्तरकपालमृदि,भिन्नसन्तानवर्तिन्यां,विद्यत एवेति कृत्वा, व्यभिचार्यनैकान्तिकम्–तन्मृत्त्वेऽतन्मृत्त्वे च भावात् प्रमेयत्ववदनित्यत्वसिद्धौ । यस्मादेवं तत्तस्मात्, कथ न बाधा, येनोच्यते न काचिन्नो बाधेति ? । एतदाशङ्क्याह–अत्रेत्यादि । अत्रोच्यते । किमित्याह–**अधिकृतघटमृद एव स्वकपालमृत्त्वाद्** बाधाभाव इति वक्ष्यमाणक्रियायोगः, स्वग्रहण घटान्तरकपालमृद्व्यवच्छेदार्थं, स्वकपालमृत्त्व च

एकवस्तुसन्तानत्वात् एक एवासौ वस्तुसन्तानो भावाव्यवच्छेदेन । एकवस्तुसन्तानत्व च सत सर्वथाऽसत्त्वानापत्ते , नहि सदसद् भवति । कुत इत्याह- **तदुत्पत्त्यादिदोषप्रसङ्गात्** असदुत्पत्तितन्नाशसदन्तरोन्मज्जनप्रसङ्गादित्यर्थ , इत्येवम् , नैवासौ कपालमृद्विवक्षिता, घटमृदो विवक्षिताया एव, सर्वथाऽन्यैव । अन्या तु भवत्यूर्ध्वाद्यपृथग्भवनात्मस्वभावनिवृत्त्या, किन्त्वन्यैव न । कुत इत्याह- **तस्या एव** विवक्षितघटमृद , तथाभावाद् विवक्षितकपालमृत्त्वेन भावात्, भावश्चान्यथाऽन्येन प्रकारेण, तस्या एव तथाऽभवनलक्षणेन अबीजत्वेन हेतुना, कपालानुपपत्तेर्विवक्षितकपालानुपपत्ते । अनुपपत्तिश्च असत एव सत्ताऽयोगात्, अयोगश्चातिप्रसङ्गात् , तत्प्रतिनियतशक्त्यभावेन तद्वत्सदन्तरापत्तेरिति हृदयम् । **न चैवमित्यादि** । न चैवं घटान्तरकपालमृदविवक्षिता, अधिकृतघटमृदात्मिका विवक्षितघटमृदात्मिका । कुत इत्याह- **अतत्पूर्विकत्वात्** । सा अधिकृतघटमृत् पूर्वा यस्या विवक्षितकपालमृद. सा तत्पूर्विका, न तत्पूर्विकाऽतत्पूर्विका तद्भावस्तस्मात् । इहैव युक्तिमाह- **सदन्तरस्येत्यादिना** । सदन्तरस्य अधिकृतघटमृदादे , सदन्तरत्वाविरोधाद् घटान्तरकपालमृत्त्वादिविरोधात् । एनमेवाह- **तद्भावेन** सदन्तरस्य सदन्तरत्वभावेन, अधिकृतघटमृदादेर्घटान्तरकपालमृदादिभावेनेत्यर्थ. । किमित्याह- **इतरोच्छेदापत्तेः**। घटान्तरकपालमृदाद्युच्छेदाऽऽपत्ते ,अधिकृतघटमृदादौ तत्प्रवेशादित्यर्थ.। तत' किमित्याह- **तद्वदितरस्येति** । अत्र तद्वदिति घटान्तरकपालमृदाद्युच्छेदापत्तिवदितरस्य सदन्तरस्याधिकृतघटमृदादिनिबन्धनस्य, विवक्षितकपालमृदादेरुच्छेदापत्ति । कुत इत्याह- **अतदुपादानत्वप्रसङ्गात्** । तदाधिकृतघटमृद्वस्तूपादान यस्य सदन्तरस्य विवक्षितकपालमृल्लक्षणस्य तत्तदुपादानं तद्भावस्तदुपादानत्व तस्य नञा प्रतिषेध. , न तदुपादानत्वमतदुपादानत्व, तत्प्रसङ्गात् , तस्यान्यत्र प्रविष्टत्वादित्यर्थ. । यदि नामैव तत किमित्याह- **अहेतुकत्वापत्तेः** । इतरस्य प्रागुनिर्दर्शितस्वरूपस्य, एवं युक्त्यनुभवाविरोधात् कारणात्, न घटान्तरकपालमृदधिकृतघटमृदात्मिकेति योजनीयम्। किन्तु **मृत्समाने-**

त्यादि । मृत्समानपरिणामा तु भवति घटान्तरकपालमृत् । कुत इत्याह-तथाप्रतीतेः । तथा मृत्समानपरिणामतया प्रतीते परिच्छेदात् । अधिकृतघटकपालमृदप्ययमेवास्तु, इति तद्वदन्वयाभाव इत्येतदाशङ्क्याह-न चैतावदित्यादि । न चैतावत्समानपरिणाममात्रम्, अन्वयलक्षणम्, अपि त्वनेकस्वभावे वस्तुनि घटमृदादौ, तत्तन्मृत्त्वमिति पूर्ववत् । एतच्च तत्तन्मृत्त्वं, तद्रूपशक्तिपरिणामादिसङ्गतमधिकृतघटमृद्रूपशक्तिपरिणामादिना सङ्गत युक्तियुक्तम्, आदिशब्दात् तद्गन्धादिग्रह । एतदेव विशिष्यते-तत्तथाभावाध्यवसायहेतु तस्या अधिकृतघटमृद, तथाभावो विवक्षितकपालमृद्भाव, तत्तथाभाव', तस्मिन्नध्यवसायस्तत्तथाभावाध्यवसाय, तथा तत्स्वरूपग्राहको बोधविशेषस्तस्य हेतु कारण तत्तन्मृत्त्वम्, तथा च सोऽय घट इति तत्कपालेषु भवत्यध्यवसाय । एवमविगानप्रतीयमानं विशिष्टमेव तत्तन्मृत्त्वमिति नात्यन्तभिन्नायां मृदि प्रक्रमात् घटान्तरकपालमृदि, वर्तत इत्येव बाधाऽभाव । ततश्च साधूक्तं न काचिद् नो बाधेति ॥

**एवमन्वयव्यतिरेकवद्वस्तुसिद्धौ यदपि परैश्चोद्यते-- तथापि तत्र किञ्चिन्निवर्तत एवापरं तिष्ठत्येवेति तद्भेदापत्त्याऽनेकान्तवादहानादि । तदपि परिहृतमेव, केवलोभयासिद्धेः, वस्तुन एव शबलरूपत्वाद् निवर्तमानस्य कथञ्चिदनिवर्तमानाव्यतिरिक्तस्वभावत्वात्, तच्चदनुभवसिद्धेस्तदेतादित्यवगमात्, न तदवेदिनोऽक्षयोपशमात्, अनिवर्तमानस्यापि कथञ्चिन्निवर्तमानाव्यतिरिक्तस्वभावत्वात्, स्वभावस्य चापर्यनुयोगाद् न्याययुक्तत्वात्, अन्यथा वस्त्वनुपपत्तेरिति ॥**

अतिदेशेन दूषणान्तर परिहरन्नाह- एवमित्यादि । एवमुक्तनीत्या, अन्वयव्यतिरेकवद्वस्तुसिद्धौ सत्या, यदपि परैश्चोद्यते कुशाग्रीयबुद्धिभि', तथापि तत्र नित्यानित्ये वस्तुनि, किञ्चिद् निवर्तत एव, अन्यथैकान्तनित्यत्वाऽऽपत्ते, अपरं तिष्ठत्येव अन्यथैकान्तानित्यतापत्ते' । इत्येवं, तयोर्निवर्तमानतिष्ठतोर्भेदापत्त्या कारणेन, अनेकान्तवादहानादि

अनेकान्तवादहानम्-- निवर्तमानस्यैकान्तानित्यतया, तिष्ठतश्च नित्यतया; आदिशब्दात् तदेकान्तदोषश्चोक्तनीत्येति । तदपि परिहृतमेव । कुत- इत्याह- **केवलोभयासिद्धेः** । केवलयोरुभयोर्निवर्तमानतिष्ठतोरसिद्धेः कारणात् परिहृतम । एतदेव भावयति- **वस्तुन इत्यादिना** । वस्तुन एव शबलरूपत्वादुक्तनीते । एव च निवर्तमानस्य कथञ्चित् केनचित् प्रकारेण तत्संबन्धबीजनिबन्धनेन, अनिवर्तमानाव्यतिरिक्तस्वभावत्वात्, एतत्स्वभावत्वं च तत्तदनुभवसिद्धे., तस्मिन्ननिवर्तमाने तदनुभवसिद्धेर्निवर्तमानानुभवसिद्धेः, सिद्धिश्च तदेतदित्यवगमात् कपालेषु घटकपालानीति परिच्छेदात् । नाय नालिकेरद्वीपवासिन. प्रथमदर्शने, इत्याशङ्काऽपोहायाह- **न तदवेदिनोऽक्षयोपशमात्** । कपालेषु न घटकपालानीति परिच्छेद , कस्य?, तदवेदिनो घटावेदिन । कस्मादित्याह-**अक्षयोपशमात्** क्षयोपशमाभावात्, धूमाग्निजन्यत्ववदिति भावनीयम् । लेशत. प्रासङ्गिकमभिधाय प्रकृतमेवाह- अनिवर्तमानस्यापि कथञ्चिदिति पूर्ववत्, निवर्तमानस्वभावाव्यतिरिक्तस्वभावत्वात् तत्तदनुभवसिद्धेरित्यादि यथायोग योजनीयम् । किमयमेवभूतस्वभाव इत्येतत्परिजिहीर्षयाऽऽह- **स्वभावस्य चापर्यनुयोगात्** पर्यनुयोगाभावात्, अभावश्च न्याययुक्तत्वात् । अनुभवसहायत्वेन विपक्षे बाधामाह- **अन्यथा वस्त्वनुपपत्तेः** । तद्भेदाभेदमन्तरेण निवर्तमानतिष्ठतोरग्रहणेनाभावप्रसङ्गादित्युक्तप्रायम् । ततश्चैतदुक्त भवति- अनेकान्तात्मके तस्मिन् वस्तुतत्त्वे एकान्तविकल्पानवसर एव, यथा मेचके एकान्तकृष्णादिविकल्पस्य । एवं च न तत्र किञ्चिदेकान्तेन निवर्तते, नापि तिष्ठति, किं तर्हि ?, वस्त्वेव तत् तथा भवतीति सिद्धमेतत् । एवविधे चास्मिन्नेकान्तविकल्पन सत्त्वादिनाऽग्न्यौष्ण्यादिप्रतिषेधकल्पम् । इति भावितस्याद्वादमार्गेणाऽपकर्णयितव्यम् । इत्यल विस्तरेण ॥

**न चेह किञ्चिद् न निवर्तते, एकान्तानिवृत्तौ तद्विलक्षणबुद्ध्यभावतः कपालप्रतिपत्त्यसिद्धेः, विशेषाभावात् तस्याप्रच्युतानुत्पन्नस्थिरैकस्वभावत्वात् । न चोर्ध्वाद्याकार एव कपालाद्या-**

नितिष्ठति अन्नमनेन निष्ठान, पुंक्लीबलिङ्ग । यद्वाचस्पति –'तेमने तु निष्ठानोऽस्त्री, ॥ १ ॥ तिम्यत्यार्द्रीभवत्यनेन तेमनमुपसेचनं, क्रोपनाख्यम् ॥ २ ॥

करम्भो दधिसक्तव ॥ ६३ ॥

करोति तृप्तिं करम्भ "कृकलेरम्भ" ॥ (उणा–३३६) ॥ इत्यम्भ., केन रम्यते मील्यते वा, दध्युपसिक्ता सक्तव ॥१॥

शेषश्चात्र- अथ करम्बो दधिसक्तुषु ॥ ६३ ॥

घृतपूरो घृतवर पिष्टपूरश्च घार्तिक. ।

घृतेन पूर्यते, घृतपूर क्षीराढ्य समितापिण्डो घृतेन शृत ॥ १ ॥ घृतेन वरो घृतवर ॥ २ ॥ पिष्टेन पूर्यते पिष्टपूर ॥३॥ घृतेन ससृष्टो घार्तिक, "संसृष्टे" ॥६।४।५॥ इतीकण् ॥ ४ ॥

चमसी पिष्टवर्ति स्याद्

चम्यते चमसी "तप्यणि"॥ (उणा–५६९) ॥ इत्यस । गौडस्तु 'चमस पिष्टवर्ति स्यात्' इति पुस्याह ॥ १ ॥ मुद्गादीना पिष्टस्य वर्ति पिष्टवर्ति ॥२॥

वटकस्त्ववसेकिम. ॥ ६४ ॥

वट्यते वेष्ट्यते वटक "बहुलम्"॥५।१।२ ॥ इत्यकट्, यद्वा–वटति वट, तत स्वार्थे क, पुंक्लीबलिङ्ग ॥ १ ॥ अवसेकेन निर्वृत्तो अवसेकिम "भावादिम" ॥ ६।४।२१ ॥ इतीम, भक्ष्यविशेष ॥ २ ॥

शेषश्चात्र—

ईण्डेरिका तु वटिका शष्कुली त्वर्धलोटिका ।
पर्पटास्तु मर्मराला घृताण्डी तु घृतौषणी ॥ १ ॥
समिताखण्डाज्यकृतो मोदको लड्डुकश्च स ।
एलामरिचादियुत स पुन सिंहकेसर ॥ २ ॥ ६४ ॥

भृष्टा यवा. पुनर्धानाः

धीयन्ते धाना, स्त्रिया बहुवचनान्तोऽयम्, "प्याधा-"॥ (उणा-२५८) ॥ इति न ॥ १ ॥

धानाचूर्णं तु सक्तवः ।

षचि सेचने, सच्यन्ते सक्तव, पुंक्लीबलिङ्ग, एकवचनान्तोऽप्ययम् "कृसिकम्यमि-"॥ (उणा–७७३) ॥ इति तुन् ॥ १ ॥

पृथुकाश्चिपटस्तुल्यौ

पृथुत्वात् पृथुक आर्द्रं भृष्ट सस्यम्, तद्धि पाकात् पृथुर्भवति, प्रथते वा "कञ्चु-काशुक-"॥ (उणा–५७) ॥ इत्युके निपात्यते ॥१ ॥ चिपिटीभवनाच्चिपिट, चिपि-टक इत्यमर ॥ २ ॥

लाजा स्यु पुनरक्षता ॥ ६५ ॥

लाज्यन्ते भृज्यन्ते लाजा, पुस्त्रीलिङ्ग, बहुवचनान्तश्च ॥ १ ॥ न क्षण्यन्ते अक्षता, पुक्लीबलिङ्ग, पुस्यय बहुवचनान्त ॥ २ ॥ ६५ ॥

शेषश्चात्र—

लाजेषु भरुजोद्धूषखटिकापरिवारका ॥

गोधूमचूर्णे समिता

समीक्रियते समिता ॥ १ ॥

यवक्षोदे तु चिक्कस ।

चीयते चिक्कस, पुक्लीबलिङ्ग "फनसतामरसादय" ॥ (उणा–५७३) ॥ इत्यसे निपात्यते, चिक्कस्यति वा । कौशिकस्तु–चिक्क इति व्यसने पठस्तस्मादसामि-च्छति ॥ १ ॥

गुड इक्षुरसक्काथ

गूयते क्रथ्यते गुड, "कुगुहुनी-"॥ (उणा–१७०) ॥ इति ड कित्, गुडति रक्षति वा ॥ १ ॥

शर्करा तु सितोपला ॥ ६६ ॥

सिता च

शीर्यते शर्करा "किशृत्रृभ्य कर" ॥ (उणा–४३५) ॥ इति कर ॥ १ ॥ सितोपल स्फटिकस्तत्सदृशत्वात् सितोपला ॥२॥६६॥ सीयते बध्यते सिता ॥३॥

मधुधूलिस्तु खण्डः

मधुन क्षौद्रस्य धूलिरिव मधुरत्वाद् मधुधूलि ॥ १ ॥ खडुड् मन्थे, खण्ड्यते खण्ड, पुक्लीबलिङ्ग ॥ २ ॥

तद्विकृती पुन. ।

मत्स्यण्डी फाणित चापि

तस्य खण्डस्य विकार, मद स्यन्दते मत्स्यण्डी सामान्यशर्करा, पृषो-दरादित्वात्, मत्स्यान् अमति रुजति मत्स्याण्डीति वैद्या, यद धन्वन्तरि —"शर्क-रोक्ता तु मीनाण्डी श्वेता मत्स्याण्डिका सिता" इति । "मत्स्यण्डिका खण्डसिता

क्रमेण गुणवत्तरा" इति तु वाग्भट ॥ १ ॥ फाण्यते द्रवत्वात् फाणितं खण्डश्चोत, पुक्लीबलिङ्गोऽयम्, यद्वाचस्पति —"फाणितमस्त्रियाम्" ॥ १ ॥

रसालाया तु मार्जिता ॥ ६७ ॥
शिखरिणी

रसमलति रसाला, तत्र ॥ १ ॥ मार्ज्यते मार्जिता, मार्जिताऽपि ॥ २ ॥ ६७ ॥ शिखरमस्त्यस्या शिखरिणी ॥ ३ ॥

अथ यूर्यूषो रस

यौतीत्येवशीलो यू, पुलिङ्ग, भ्राजादित्वात् क्विपि साधु, यद् वैजयन्ती— "यूषोऽस्त्री यू पुमान् रसे"॥ १ ॥ यूयते मिश्रीक्रियते यूष, पुक्लीबलिङ्ग "योरूच्च वा" ॥ (उणा–५४१) ॥ इति ष, यूषति हिनस्ति रुज वा ॥ २ ॥ रस्यते रसो मुद्गादीनाम् ॥ ३ ॥

दुग्ध तु सोमजम् ।
गोरस क्षीरमूधस्यं स्तन्य पुसवन पय ॥ ६८ ॥

दुह्यते दुग्धम् ॥ १ ॥ सोमरसाज्जात सोमजम् ॥ २ ॥ गोर्वेन्वा रसो गोरस ॥ ३ ॥ घस्यते क्षीरम्, पुक्लीबलिङ्ग । "घसिवशि-" ॥ ( उणा—४१९ ) ॥ इति किर्दीरे, "गमहन-"॥४।२।४४॥ इत्युपान्त्यलोपे, च "घस्वस" ॥२।३।३६॥ इति सस्य षत्वम् ॥ ४ ॥ ऊधसि भवमूधस्यम् ॥ ५ ॥ स्तने भव स्तन्यम्, देहांशत्वाद् य ॥ ६ ॥ पुभि सूयतेऽनेन पुसवनम् ॥ ७ ॥ पीयते पय "पाहाक्भ्या पयह्यौ च" ॥ (उणा--९५३) ॥ इत्यस् ॥ ८ ॥ ६८ ॥

शेषश्चात्र—

दुग्धे योम्य बालसात्म्यं जीवनीय रसोत्तमम् ।
सर गव्य मधुज्येष्ठ धारोष्ण तु पयोऽमृतम् ॥

पयस्य घृतदध्यादि

पयसो विकार पयस्यम् " पयोद्रोर्य " ॥ ६ । २ । ३५ ॥ इति य, आदिशब्दान्नवनीतादि ॥ १ ॥

पेयूषोऽभिनव पय ।

पीयते पेयूष " कोरदूषाटरूष-" ॥ ( उणा–५६१ ) ॥ इत्यूषान्तो निपात्यते । वैजयन्ती तु– " आ सप्ताहात् तु पेयूष ततो मोरटमोरके" इति क्लीबमाह । पीयूषमित्यपि, नवप्रसूतगवीक्षीर क्वथित सदभिनवम् ॥ १ ॥

उभे क्षीरस्य विकृती किलाटी कूर्चिकाऽपि च ॥ ६९ ॥

किरति क्षुधं किलाटी, पुंस्त्रीलिङ्ग "किरो लश्च वा" ॥ (उणा-१४७) ॥ इत्याद ॥१॥ कूर्चस्तन्मस्तु तदस्त्यस्या कूर्चिका, कूचति कूचिका इत्यके ॥१॥६९॥

**पायस परमान्न च क्षैरेयी**

पयसि सस्कृत पायसं, पुक्लीबलिङ्ग "संस्कृते भक्ष्ये" ॥६।२।१४०॥ इत्यण् ॥ १ ॥ परमं च तदन्नं च परमान्नम् ॥ २ ॥ क्षीरे सस्कृता क्षैरेयी "क्षीरादेयण्" ॥६।२।१४२॥ इत्येयण् ॥ ३ ॥

**क्षीरज दधि ।**

**गोरसश्च**

क्षीराज्जात क्षीरजम् ॥ १ ॥ दधते बलिष्ठता दधि, क्लीबलिङ्ग, "पदिपठि-" (उणा-६०७) इति इ ॥ २ ॥ ३ ॥

शेषश्चात्र—

दध्नि श्रीघनमङ्गल्ये ॥

**तदघन द्रप्सं पत्रलमित्यपि ॥ ७० ॥**

दृप्यतेऽनेन द्रप्सं "मावा-" ॥ (उणा-५६४) ॥ इति बहुवचनात् स, तत "स्पृशादिसृपो वा"॥४।४।११२॥ इत्यकारागम, द्रप्स्यमित्यपि ॥ १ ॥ पत्र लाति पत्रलम्, पत्रमस्यास्तीति वा, सिध्मादित्वाद् ल ॥ २ ॥ ७० ॥

**घृत हविष्यमाज्य च हविराघारसर्पिषी ।**

घरति घृत, पुंक्लीबलिङ्ग "शीरी-" ॥ (उणा-२०१) ॥ इत्यादिना त, कित् ॥ १ ॥ हविषे हित हविष्यम् "उवर्णयुगादे" ॥७।१।३०॥ इति य ॥ २ ॥ आ अज्यतेऽनेन आज्यम् "कुप्याभिद्य-"॥५।१।३९॥ इति क्यपि निपात्यते ॥ ३ ॥ हूयते हवि, क्लीबलिङ्ग ॥ ४ ॥ आघारयति आघार ॥ ५ ॥ सर्पति सर्पि, क्लीबलिङ्ग "रुच्यर्चि-" ॥ (उणा-९८९) ॥ इति इस् ॥ ६ ॥

**ह्योगोदोहोद्भव हैयङ्गवीन**

ह्योगोदोहस्य विकारो हैयङ्गवीनं "ह्योगोदोहादीनञ् हियङ्गुश्चास्य" ॥६।२। ५५॥ इति ईनञ्, प्रस्तावाद् घृत लभ्यते । काव्यो नवनीतमित्याह ॥ १ ॥

**शरज पुनः ॥ ७१ ॥**

**दधिसार तक्रसारं नवनीतं नवोद्धृतम् ।**

शराज्जातं शरजम् ॥ १ ॥ ७१ ॥ दध्न सारं दधिसारम् ॥ २ ॥ तक्रस्य सारं तक्रसारम् ॥ ३ ॥ दध्नो मथिताद् नव तत्कालं नीतमुद्धृत च नवनीतम्, नवोद्धृतम् ॥ ४ ॥ ५ ॥

दण्डाहते कालशेयघोलारिष्टानि गोरस' ॥ ७२ ॥
रसायनं

मन्थदण्डेनाऽऽहतं दण्डाहतम्, तत्र ॥ १ ॥ कलश्या मन्थन्या भव कालशेयं "दृतिकुक्षिकलशि-" ॥६।३।१३०॥ इत्येयण् ॥ २ ॥ हन्यते मथा घोल "पिञ्छोलकल्लोल-" ॥ (उणा-४९५) ॥ इत्योले निपात्यते ॥ ३ ॥ न रेषाति हिनास्ति अरिष्टम्, सर्वरोगाजितत्वात् ॥ ४ ॥ गोर्वेन्वा रसो गोरस ॥ ५ ॥ ७२ ॥ अम्लादीन् रसानयते रसायनम् ॥ ६ ॥

अथाऽर्धाम्बूदश्वित्

अर्धमम्बु जल यत्र अर्धाम्बु, उदकेन श्वयति उदश्वित्, क्लीबलिङ्ग- "उदकाच्छ्वेर्डित्" ॥ (उणा-८८८) ॥ इति इत्, "नाम्युत्तरपदस्य च"॥३।२।१०७॥ इत्युदकस्योद ॥ १ ॥

श्वेतं समोदकम् ।

श्वेतते श्वेतम्, श्वेतरसमित्यपि, सममुदक यत्र समोदकम् ॥ १ ॥

तक्र पुन पादजलं

तञ्चति द्रुत गच्छति तक्र, पुंक्लीबलिङ्ग "ऋज्यजि-" ॥(उणा-३८८)॥ इति क्रिद् र, पादेन तुर्यांशेन जल यत्र पादजलम् ॥ १ ॥

शेषश्चात्र—
तक्रे कट्वरसारणे ।
अर्शोघ्नं परमरस ॥

मथित वारिवर्जितम् ॥ ७३ ॥

दध्ना मथनमात्रसाध्य माथितम् ॥ १ ॥ ७३ ॥

सार्पिष्क दाधिक सर्पिर्दधिभ्यां सस्कृतं क्रमात् ।

सर्पिषा सस्कृत सार्पिष्कम्, दध्ना संस्कृतं दाधिकम् "संस्कृते" ॥ ६ । ४ ।३॥ इतीकण् ॥ १ ॥ १ ॥

लवणोदकाभ्या दकलावणिकं

उदकलवणाभ्या संस्कृत दकलावणिकं ,बाहुलकादुत्तरपदवृद्धि ॥ १ ॥

उदश्विति ॥ ७४ ॥
औदश्वितमौदश्वित्क

उदश्विति संस्कृत औदश्वितम्, औदश्वित्कं 'वोदश्वित" ॥ ६।२।१४४॥ इतीकण्, पक्षेऽण् ॥ १ ॥ २ ॥ ७४ ॥

**लवणे स्यात् तु लावणम् ।**

लवणे संस्कृत लावणम् "संस्कृते भक्ष्ये" ॥६।२।१४०॥ इत्यण् ॥ १ ॥

**पैठरोख्ये उखासिद्धे**

उखाया स्थाल्या सिद्धे संस्कृते, पिठरे संस्कृतं पैठरम् ॥१॥ उखाया संस्कृतमुख्यम् "शूलोखाद् य" ॥६।२।१४१॥ इति य ॥ २ ॥

**प्रयस्त तु सुसंस्कृतम् ॥ ७५ ॥**

परिव्ययपाकादिना प्रयत्नसाध्य प्रयस्तम्, सुष्ठु संस्कृतम् ॥ १ ॥ ७५ ॥

**पक्के राद्ध च सिद्ध च**

पच्यते स्म पक्कम्, तत्र, उत्तरत्र 'विनाऽम्बुना' इति वचनादिहाऽम्बुनेति लभ्यते ॥ १ ॥ राध्यति स्म राद्धम् ॥ २ ॥ सिध्यति स्म सिद्धम् ॥ ३ ॥

**भृष्ट पक्क विनाऽम्बुना ।**

भृज्ज्यते स्म भृष्टम्, जलेन विना पक्कम् ॥ १ ॥

**भृष्टामिष भटित्र स्याद्भूतिर्भरूटक च तत् ॥ ७६ ॥**

भृष्ट यदङ्गारेषु विपक्क मास तत्, भटत्यनेन भटित्रम् "बन्धिवहि" ॥ (उणा-४५९) ॥ इतीत्र ॥ १ ॥ भवति बलमनया भूति ॥ २ ॥ बिभर्ति बल भरूटकम् "कीचकपेचक" ॥ (उणा-३३) ॥ इत्यके निपात्यते ॥ ३ ॥ ७६ ॥

**शूल्य शूलाकृत मास**

शूले संस्कृत शूल्यम् "शूलोखाद् य" ॥६।२।१४१॥ इति य ॥ १ ॥ शूलाक्रियते स्म पाकाय शूलाकृतम् "शूलात् पाके" ॥७।२।१४२॥ इति डाच् । अन्ये तु सामान्यविशेषभाव परिहृत्य अनयोर्भटित्रेणैकार्थतामाहु ॥ २ ॥

**निष्काथो रसक समौ ।**

निष्काथो मासस्य, प्रस्तावात् ॥ १ ॥ रस पिष्टमासजस्तत्तुल्यो रसक ॥२॥

**प्रणीतमुपसपन्न**

प्रणीयते स्म प्रणीत रूपरसादिनिष्पन्नमन्नम् ॥१॥ उपसंपद्यते स्म उपसंपन्नम् ॥२॥

**स्निग्धे मसृणचिक्कणे ॥ ७७ ॥**

स्निह्यति स्म स्निग्ध, तत्र ॥ १ ॥ मस्यति मसृणं "भ्रूणतृण-" ॥ (उणा-१८६) ॥ इति णे निपात्यते ॥ २ ॥ चीयते चिक्कण "चिक्कणकुक्कण-" ॥ (उणा-१९०) इति अणे निपात्यते, चिगित्यव्यक्त कणति वा । कौशिकस्तु-चिक्क इत्यस्याणे चिक्कणमिच्छति ॥ ३ ॥ ७७ ॥

पिच्छिल तु विजिविल विज्जल विजिल च तत् ।

पिच्छा आचामोऽस्याऽस्ति पिच्छिल "लोमपिच्छादे शेलम्" ॥ ७ । २ । २८ ॥ इतीलं ॥ १ ॥ विजते चलति विजिविलम्, विजिल च "स्थण्डिलकपिल-" ॥ ( उणा–४८४ ) ॥ इतीलान्तौ निपात्येते ॥ २ ॥ ३ ॥ विज् चल जल यत्र विज्जलम्, विजिपिलमित्यपि ॥ ४ ॥

भावित तु वासितं स्यात्

भूण् अवकल्कने भाव्यते द्रवद्रव्येण मिश्रीक्रियते स्म भावितम् ॥ १ ॥ वास्यते द्रव्यान्तरेण मिल्यते, धूपपुष्पादिना वाऽधिवास्यते वासितम्, यन्मुनि – 'धूपित वासित विदु' ॥ २ ॥

तुल्ये समृष्टशोधिते ॥ ७८ ॥

समृज्यते स्म समृष्ट वालमाक्षिकादिरहितम् ॥ १ ॥ शोध्यते स्म शोधितम् ॥ २ ॥ ७८ ॥

काञ्चिक काञ्जिक धान्याम्लारनाले तुषोदकम् ।

कुल्माषाभिषुतावन्तिसोमशुक्तानि कुञ्जलम् ॥ ७९ ॥

चुक्र धातुघ्नमुन्नाह रक्षोघ्न कुण्डगोलकम् ।

महारस सुवीराम्ल सौवीर

कञ्चयति दीपयति अग्निं, कच्यते बध्नाति दोषान् वा काञ्चिकं "कुषिकहृदिक—" ॥ ( उणा- ४५ ) ॥ इतीक निपात्यते, काञ्च्या पुरि भव वा ॥ १ ॥ चस्य जत्वे पञ्जिकावत् काञ्जिक, क जलमनक्ति वा ॥ २ ॥ धान्यमम्लयति धान्याम्लम् ॥ ३ ॥ अरनालोऽरभक्त तज्जमारनालम् ॥ ४ ॥ तुषाणामुदक तुषोदकम् ॥ ५ ॥ कुल्माषैर्यवादिभिरर्द्धस्विन्नैरभिषूयते परिवास्यते स्म कुल्माषाभिषुत, व्यस्तमपि तेन कुल्माषमभिषुत चेति ॥ ६ ॥ अवन्तिषु सूयते अवन्तिसोमम् ॥७॥ शक्नोति निर्मलीकर्तुम्, शोचति निर्मलीभवत्यनेन वा शुक्त "पुतपित्त-" ॥ (उणा–२०४ ) ॥ इति ते निपात्यते ॥ ८ ॥ कुञ्ज लाति कुञ्जलम्, कुत्सित जलमस्य वा, पृषोदरादित्वात् ॥ ९ ॥ ७९ ॥ चकते तृप्यत्यनेन चुक्र, पुक्लीबलिङ्ग , "चकिरमिविकसेरुच्चाऽस्य" ॥ ( उणा -३९३ ) ॥ इति र ॥ १० ॥ धातून् हन्ति धातुघ्न "अचित्ते-" ॥ ५ । १ । ८३ ॥ इति टक् ॥ ११ ॥ उन्नह्यत्यनेन उन्नाहम् ॥ १२ ॥ रक्षासि हन्ति रक्षोघ्नम्, तद्योगे आधिदैविकदोषाभावात् ॥ १३ ॥ कुण्ड गुडति रक्षति, लत्वे कुण्डगोलकम् ॥ १४ ॥ महान् रसोऽत्र महारसम् ॥ १५ ॥ सुवीरेष्वम्ल सुवीराम्लम् ॥ १६ ॥ सुवीरेषु प्रायो भव सौवीरम् ॥ १७ ॥

शेषश्चात्र—

कुल्माषाभिषुते पुन ।

गृहाम्बु मधुरा च ॥

म्रक्षण पुन· ॥ ८० ॥

तैल स्नेहोऽभ्यञ्जन च

म्रक्ष्यतेऽनेन म्रक्षणम् ॥ १ ॥ ८० ॥ तिलाना विकारस्तैलम् , स्निह्यत्यऽनेन स्नेह , पुंक्लीबलिङ्गौ ॥ २ ॥ ३ ॥ अभ्यज्यतेऽनेन अभ्यञ्जनम् ॥ ४ ॥

वेषवार उपस्कर· ।

वेषं व्याप्तिं वृणीते वेषवार , काशमर्दत्रिकटुकादि ॥ १ ॥ शाकाद्युपस्क्रियतेऽनेन उपस्कर "पुनाम्नि-" ॥ ५ । ३ । १३० ॥ इति घ ॥ २ ॥

तद्भेदानाह—

स्यात् तिन्तिडीकं तु चुक्रं वृक्षाम्ल चाम्लवेतसे ॥ ८१ ॥

तिम्यति आर्द्रीभवति तिन्तिडीकं "सृणीकाऽस्तीक-" ॥ ( उणा--५० ) ॥ इतीके निपात्यते, तिन्तिडिशैलभवं वा ॥ १ ॥ चकते तृप्यत्यऽनेन चुक्रम्, पुंक्लीबलिङ्ग ॥ २ ॥ वृक्षस्याम्ल वृक्षाम्लम् ॥ ३ ॥ अम्लवेतसवृक्षनिर्यासोऽम्लवेतस , तत्र ॥ ४ ॥ ८१ ॥

हरिद्रा काञ्चनी पीता निशाख्या वरवर्णिनी ।

हरिं पीतं वर्ण द्राति गच्छति हरिद्रा ॥ १ ॥ काञ्चनवर्णत्वात् काञ्चनी ॥ २ ॥ पीता पीतवर्णेन ॥ ३ ॥ निशाख्येति रात्रिपर्याया ॥ ४ ॥ वरो वर्णोऽस्त्यस्या वरवर्णिनी ॥ ५ ॥

क्षवः क्षुताभिजननो राजिका राजसर्षपः ॥ ८२ ॥

असुरी कृष्णिका चासौ

क्षौत्यनेन क्षव ॥ १ ॥ क्षुतमभिजनयति क्षुताभिजनन ॥२॥ राजते राजिका ॥ ३ ॥ सर्षपाणा राजा राजसर्षप , राजदन्तादित्वात् पूर्वनिपात ॥ ४ ॥ ८२ ॥ अस्यते शाकादौ असुरी "वाश्यसि-" ॥ (उणा--४२३) ॥ इत्युर , असुरस्त्रीव वा ॥ ५ ॥ कृष्णेव कृष्णिका वर्णेन ॥ ६ ॥

कुस्तुम्बुरु तु धान्यकम् ।

धन्या धन्याकं धान्याक

कुत्सिता तुम्बुरु कुस्तुम्बुरुरौषधिजाति वर्चस्कादित्वात्, तत्फलमपि कुस्तुम्बुरु, पुंक्लीबलिङ्ग ॥ १ ॥ धान्यमिव धान्यकम् ॥ २ ॥ धने साधुर्धन्या ॥३॥ धन्यमकति धन्याकम् ॥ ४ ॥ धान्यमकति धान्याकम् ॥ ५ ॥

शेषश्चात्र—अथ स्यात् कुस्तुम्बुरुरल्लुका ।।

मरिचं कृष्णमूषणम् ॥ ८३ ॥
कोलकं वेल्लज धार्मपत्तनं यवनप्रियम्।

म्रियते जिह्वाऽनेन मरिचं "मृत्रपिभ्यां-" ॥ ( उणा--११७ ) ॥ इतीच ॥ १ ॥ कृष्णं वर्णेन, कर्षति तैक्ष्ण्याद् वा ॥ २ ॥ ऊषति रुजति ऊषणम् ॥ ३ ॥ ८३ ॥ कोलति संस्त्यायति कोलकम् ॥ ४ ॥ वेल्ले वेल्लातटे जायते वेल्लजम्, वेल्लाच्य शार्ङ्गीलेके ॥ ५ ॥ धर्मपत्तने भवं धार्मपत्तनम् ॥ ६ ॥ यवनानां प्रियं यवनप्रियम् ॥ ७ ॥

शेषश्चात्र—मरिचे तु द्वारवृत्त मरीचं बलितं तथा ॥

शुण्ठी महौषध विश्वा नागर विश्वभेषजम् ॥ ८४ ॥

शुण्ठति शुष्यति शुण्ठि, "किलिपिलि-" ॥ ( उणा--६०८ ) ॥ इति इ, ङ्या तु शुण्ठी ॥ १ ॥ महच्च तदौषध च महौषधम् ॥ २ ॥ विशति दोषान् विश्वा, स्त्रीक्लीबलिङ्ग "नीघृषीष्यृ-" ॥ ( उणा-५११ ) ॥ इति किव्व ॥ ३ ॥ नगराख्ये देशे भवं नागरम्, न न गिरति कफमिति वा नखादित्वात् ॥ ४ ॥ विश्वस्य भेषजं विश्वभेषजम्, अनेकदोषजित्त्वात् ॥ ५ ॥ ८४ ॥

वैदेही पिप्पली कृष्णोपकुल्या मागधी कणा ।

विदेहेषु भवा वैदेही ॥ १ ॥ पलत्यातुर पिप्पली "पृपलिभ्यां टित् पिप् च पूर्वस्य" ॥ (उणा—११) ॥ इत्य ॥ २ ॥ कृष्णा वर्णेन, कर्षति कफं वा ॥ ३ ॥ उपकोलति संस्त्यायति उपकुल्या "कुलेर्ड् च वा" ॥ (उणा—३६२ ) ॥ इति किद् य ॥ ४ ॥ मगधेषु भवा मागधी ॥ ५ ॥ कणा सन्त्यस्या कणा ॥ ६ ॥

शेषश्चात्र—

पिप्पल्यामूषणा शौण्डी चपला तीक्ष्णतण्डुला ।
उषणा तण्डुलफला कोला च कृष्णतण्डुला ॥ १ ॥

तन्मूल ग्रन्थिकं सर्वग्रन्थिक चटिकाशिरः ॥ ८५ ॥

तन्मूलं पिप्पलीमूलम्, ग्रन्थिप्रतिकृति ग्रन्थिकम् ॥ १ ॥ सर्वे ग्रन्थयोऽत्र सर्वग्रन्थिकम् ॥ २ ॥ चटिकाशिरोरूपत्वात् चटिकाशिर ॥ ३ ॥ ८५ ॥

त्रिकटु त्र्यूषण व्योष

त्रीणि कटूनि ऊषणानि च शुण्ठीमरिचपिप्पल्याख्यानि समाहृतानि त्रिकटु, त्र्यूषणम्, त्रिकटुकमपि ॥ १ ॥ २ ॥ विशेषेण ओषति दहति व्योषम् ॥३॥

अजाजी जीरक' कणा ।

अज स्वाभाविकं मन्दाग्नित्वमजति क्षिपति अजाजी, लिहादित्वादचि अजेर्वीर्न भवति ॥ १ ॥ जयति मन्दाग्नित्व जीर "चिजि-"॥ (उणा–३९२)॥ इति रे दीर्घत्वम्, तत के, जीरक, पुक्लीबलिङ्ग ॥ २ ॥ कणा सन्त्यस्या कणा ॥ ३ ॥

शेषश्चात्र–जीरे जीरणजरणौ ॥

सहस्रवेधि वाल्हीक जतुकं हिङ्गु रामठम् ॥ ८६ ॥

सहस्र बहु वेधयति सहस्रवेधि ॥ १ ॥ वाल्हीके उदीच्यदेशे भव बाल्हीकम् ॥ २ ॥ जायते जतुकं "कञ्चुकाशुक-" ॥ (उणा–५७) ॥ इत्युके निपात्यते ॥ ३ ॥ हिनोति नासा हिङ्गु, पुक्लीबलिङ्ग "होर्हिन् च" ॥ ( उणा–७६० ) ॥ इति गु ॥ ४ ॥ रमठे उदीच्यदेशे भव रामठम् ॥ ५ ॥

शेषश्चात्र–

हिङ्गौ तु भूतनाशनम् ।

अगूढगन्धमत्युग्रम् ॥ ८६ ॥

न्यादः स्वदनं खादनमशनं

निघसो वल्भनमभ्यवहारः ।

जग्धिर्जेक्षणभक्षणलेहा

प्रत्यवसाय घसिराहारः ॥ ८७ ॥

प्सानाऽवष्वाणविष्वाणा भोजन जेमनादने ।

न्यादनं न्याद "न्यादो नवा" ॥५।३।२४॥ इत्यलि निपात्यते ॥ १ ॥ स्वद्यते स्वदनम् ॥ २ ॥ खाद्यते खादनम् ॥ ३ ॥ अश्यतेऽशनम् ॥ ४ ॥ न्यदनं निघस "घस्लृ सनद्यतनी-" ॥४।४।१७॥ इत्यलि अदेर्घस्लृ ॥ ५ ॥ वल्भ्यते वल्भनम् ॥ ६ ॥ अभ्यवहरणमभ्यवहार ॥ ७ ॥ अदनं जग्धि "यपि चादो जग्ध् ॥४।४।१६॥८॥ जक्ष्यते जक्षणम् ॥ ९ ॥ भक्ष्यते भक्षणम् ॥ १० ॥ लेहन लेह ॥ ११ ॥ प्रत्यवसीयते प्रत्यवसानम् ॥ १२ ॥ घसनं घासि "पदिपठि-" ॥ (उणा-६०७) ॥ इति इ ॥ १३ ॥ आहारणमाहार ॥ १४ ॥ ८७ ॥ प्सायते प्सानम् ॥१५॥ अवष्वणनमवष्वाण, विष्वणनं विष्वाण, "व्यवात्स्वनोऽशने" ॥२।३।४३॥ इति षत्वम् ॥ १६ ॥ १७ ॥ भुज्यते भोजनम् ॥ १८ ॥ जिम्यते जेमनम्, जवन च । यद् दुर्ग –'जवनं भोजन क्वचित्' ॥ १९ ॥ अद्यते अदनम् ॥ २० ॥

चर्वणं चूर्णन दन्तैः

चर्व्यते चर्वणम् ॥ १ ॥

जिह्वाऽऽस्वादस्तु लेहनम् ॥ ८८ ॥

जिह्वया आस्वादन जिह्वाऽऽस्वाद, लिह्यते लेहनम् ॥ १ ॥ ८८ ॥

कल्यवर्तः प्रातराश

कल्ये प्रभाते वर्त्तते कल्यवर्त ॥ १ ॥ प्रातरशनं प्रातराश ॥ २ ॥

सग्धिस्तु सहभोजनम् ।

सह जग्धिर्भोजन सग्धि , स्त्रीलिङ्ग , पृषोदरादित्वात् ॥ १ ॥ २ ॥

ग्रासो गुडेरक' पिण्डो गडोल. कवको गुडः ॥ ८९ ॥

गण्डोल. कवल.

ग्रस्यते ग्रास ॥ १ ॥ गुड्यते गुडेर "कुगुपति-" ॥ ( उणा–४३१ ) ॥ इति किदेर, के गुडेरक ॥ २ ॥ पिण्ड्यते पिण्ड, पुस्त्रीलिङ्ग ॥ ३ ॥ गड्यते गडोल "पिञ्छोल-" ॥ ( उणा–४९५ ) ॥ इत्याले निपात्यते ॥ ४ ॥ कौत्य-नेन कवक "दृकृ-" ॥ ( उणा–२७ ) ॥ इत्यक ॥ ५ ॥ गुडति गुड, गूयते वा ॥ ६ ॥ ॥ ८९ ॥ गण्डति वदनैकदेशे भवति गण्डोल "कटिपटि-" ॥ ( उणा–४९३ ) ॥ इत्योल ॥ ७ ॥ कौत्यनेन कवल, पुक्लीबलिङ्ग, "कोर्वा" ॥ ( उणा–४६९ ) ॥ इत्यल ॥ ८ ॥

तृप्ते त्वाघ्रातसुहिताऽऽशिता ।

तृप्यति तृप्तस्तत्र ॥ १ ॥ आघ्रायति स्म आघ्रात, आघ्राणोऽपि ॥२ ॥ सुष्ठु दधाति स्म सुहित ॥ ३ ॥ आ अश्नाति स्म आशित ॥ ४ ॥

तृप्ति· सौहित्यमाघ्राणम्

तर्पण तृप्ति ॥ १ ॥ सुहितस्य भाव सौहित्यम् ॥ २ ॥ आघ्रायते आ-घ्राणम् ॥ ३ ॥

अथ भुक्तसमुज्झिते ॥ ९० ॥

फेला पिण्डोलिफेली च

भुक्तं च तत् समुज्झित च भुक्तसमुज्झितं भुक्तोच्छिष्ट तत्र ॥ १ ॥ ९० ॥ फेल्यते त्यज्यते फेला "क्टेट -" ॥ ५ । ३ । १०६ ॥ इत्य ॥ २ ॥ पिण्ड्यते पिण्डोलि, बाहुलकादोलि । फेल्यते फेलि, स्त्रीलिङ्गौ, "नाम्युपान्त्य-"॥ (उणा–६०९ ) ॥ इति कि ॥ ३ ॥ ४ ॥

स्वोदरपूरके पुन ।

कुक्षिम्भरिरात्मम्भरिरुदरम्भरिरप्यथ ॥ ९१ ॥

स्वमेवोदर पूरयति यस्तत्र कुक्षिमात्मानमुदरमेव च बिभर्ति कुक्षिम्भरि, आत्मम्भरि, उदरम्भरि "कुक्ष्यात्मोदरात् भृग खि "॥ ५ । १ । ९० ॥ इति खि ॥ १ ॥ २ ॥ ३ ॥ ९१ ॥

आद्यून' स्यादौदरिक विजिगीषाविवर्जिते ।

ईषद्दीव्यति स्म आद्यून "पूदिव्यञ्चे-" ॥ ४ ॥ २ ॥ ७२ ॥ इति क्तस्य नत्वे "अनुनासिके च-" ॥ ४ ॥ १ ॥ १०८ ॥ इति व ऊट् ॥ १ ॥ उदरे प्रसक्त औदरिक "उदरे त्विकणाद्यूने" ॥ ७ । १ । १८१ ॥ इतीकण् ॥ २ ॥

उदरपिशाचः सर्वान्नीन सर्वान्नभक्षक' ॥ ९२ ॥

उदरे पिशाच इव प्रसक्त उदरपिशाच ॥ १ ॥ सर्वप्रकारमन्नं सर्वान्नं तदत्ति सर्वान्नीन "सर्वान्नमत्ति" ॥ ७ । १ । ९८ ॥ इति ईन ॥ २ ॥ सर्वान्नस्य भक्षयिता सर्वान्नभक्षक ॥ ३ ॥ ॥ ९२ ॥

शाष्कुल. पिशिताशी

शष्कुली मासोपलक्षणं, तामत्ति शाष्कुल 'शौष्कल' इति भागुरि ॥ १ ॥ पिशिताशी मासभक्षक ॥ २ ॥

उन्मदिष्णुस्तून्मादसयुतः ।

उन्मादशील उन्मदिष्णु "उद पचि-" ॥ ५।२।२९ ॥ इतीष्णु ॥ १ ॥

गृध्नुस्तु गर्धनस्तृष्णक् लिप्सुर्लुब्धोऽभिलाषुकः ॥९३॥
लोलुपो लोलुभः

गर्धनशीलो गृध्नु "त्रसिगृधि-" ॥ ५।२।३२ ॥ इति क्नु , "भूषा-" ॥ ५।२।४२ ॥ इत्यने गर्धन ॥ १।२ ॥ तृष्णाशील तृष्णक् ॥ ३ ॥ लब्धुमिच्छु-र्लिप्सु ॥ ४ ॥ लुभ्यति स्म लुब्ध ॥ ५ ॥ अभिलषणशीलोऽभिलाषुक ॥६॥९३॥ लुप्यतेर्लुभ्यतेश्च यङ्लुबन्तादचि लोलुप , लोलुभ । एतौ पृथगर्थावित्येके ॥७॥८॥

शेषश्चात्र–लिप्सौ लालसलम्पटौ ।
लोल ॥

लोभस्तृष्णा लिप्सा वश. स्पृहा ।
काङ्क्षाऽऽशसागर्धवाञ्छाऽऽशेच्छेहातृड्मनोरथा. ॥ ९४ ॥
कामोऽभिलाष.

लोभन लोभ ॥ १ ॥ तर्षणं तृष्णा ॥ २ ॥ लब्धुमिच्छा लिप्सा ॥ ३ ॥ वशनं वश "युवर्ण-" ॥ ५।३।२८ ॥ इत्यल् ॥ ४ ॥ स्पृहणं स्पृहा "भीषिभूषि-" ॥ ५।३।१०९ ॥ इत्यङ् ॥ ५ ॥ काङ्क्षणं काङ्क्षा ॥ ६ ॥ आशसनमाशंसा ॥७॥ गर्धन गर्ध ॥ ८ ॥ वाञ्छन वाञ्छा ॥ ९ ॥ आ श्यति अनया आशा "उपसर्गादातः ॥५।३।११० ॥ इत्यङ् ॥१०॥ एषणमिच्छा "मृगयेच्छा-" ॥५।३।१०१॥ इति साधु ॥ ११ ॥ ईहनमीहा "क्तेट-" ॥ ५।३।१०६ ॥ इत्य , घञि ईहो-

ऽपि ॥ १२ ॥ तर्षणं तृट् ॥ १३ ॥ मन एव रथो दूरगामि यत्र मनोरथ, मनोगवी च ॥१४॥९४॥ कमन काम, पुल्लीबलिङ्ग ॥१५॥ अभिलषणमभिलाष ॥१६॥

शेषश्चात्र–लिप्सा तु वनाया ।
रुचिरीप्सा तु कामना ॥

अभिध्या तु परस्वेहा

अभिचारेण ध्यानमभिध्या, परस्वविषया स्पृहा परस्वेहा, परस्वे विषमस्पृहेत्येके। दोषचिन्तापूर्वं परस्वे लिप्सेत्यर्थ । यत्काल्य –'विषमप्रार्थनाऽभिध्या'॥१॥

उद्धत पुन ।
अविनीत

उत्कण्ठ हन्ति गच्छति हिनस्ति वा उद्धत ॥ १ ॥ न विनीतोऽविनीत ॥२॥

विनीतस्तु निभृत प्रश्रितोऽपि च ॥ ९५ ॥

शास्त्रादिना विनीयते स्म विनीत ॥ १ ॥ निभृतोऽचपल ॥ २ ॥ प्रश्रयति स्म प्रश्रित ॥ ३ ॥ ९५ ॥

विधेये विनयस्थ. स्यात्

विधातव्यो विधेयस्तत्र ॥ १ ॥ विनय शास्त्रज सस्कार, इन्द्रियजयो वा तत्र तिष्ठति विनयस्थ ॥ २ ॥

आश्रवो वचने स्थित ।

आश्रृणोति वाक्यमाश्रव, वचनश्रवणे तत्पर ॥ १ ॥

वश्य. प्रणेय

वश गतो वश्य " हृयपद्य " ॥७।१।११। इति य ॥१॥ प्रणेतव्य प्रणेय ॥ २ ॥ 'विधेयादय षडेकार्था ' इत्येके ।

धृष्टस्तु वियातो धृष्णुधृष्णजौ ॥ ९६ ॥

धृष्णोति प्रगल्भते धृष्ट " धृषशस - " ॥ ४।४।६६ ॥ इतीडभाव ॥१॥ विरुद्धं याति स्म वियात ॥ २ ॥ धर्षणशीलो धृष्णु " त्रसिगृधि- " ॥५।२।३२॥ इति क्नु, " तृषिधृषि- " ॥ ५।२।८० ॥ इति नजिङि धृष्णक् ॥३॥४॥९६॥

वीक्षापन्नो विलक्ष

वीक्ष विस्मयमापन्न प्राप्त वीक्षापन्न ॥१॥ विरुद्ध लक्षयते, विगतं लक्षमस्य वा विलक्ष, निष्प्रतिपत्तिरित्यर्थ ॥ २ ॥

अथाधृष्टे शालीनशारदौ ।

न धृष्णोति अधृष्टस्तत्र ॥ १ ॥ शालाप्रवेशनमर्हति शालीन " शालीनकौपीन- " ॥ ६।४।१८५ ॥ इति निपात्यते ॥ २ ॥ शारदो नव इव सर्वत्र शारद, स्खलद्गतित्वात् ॥ ३ ॥

शुभंयु शुभसंयुक्त.

शुभमिति विभक्त्यन्तप्रतिरूपकमव्ययं, शुभमस्याऽस्ति शुभंयु "ऊर्णाऽहम्-" ॥ ७।२।१७ ॥ इति युस् ॥ १ ॥

स्यादहंयुरहङ्कृत' ॥ ९७ ॥

अहमित्यव्ययम्, अहमस्याऽस्ति अहंयु ॥१॥ अहंकारी ॥२॥९७॥

कामुक कमिता कम्रोऽनुकः कामयिताऽभिक ।

कामनः कमरोऽभीकः

कमनशील कामुक " शृकम- " ॥ ५।२।४० ॥ इत्युकण्, तृनि कमिता, कामयिता च, " स्म्यजस- " ॥ ५।२।७९ ॥ इति रे कम्र ॥१॥२॥३॥४ ॥ अनु कामयते अनुक " अनो कमितरि " ॥ ७।१।१८८ ॥ इति क ॥ ५ ॥ अभि कामयतेऽभिक, अभीकश्च " अभेरीश्च वा " ॥७।१।१८९॥ इति के साधू ॥६॥७॥ " इङित " ॥५।२।४४॥ इत्यने कामन, कमनोऽपि ॥ ८ ॥ कामयते कमर- " ऋच्छिचटि " ॥ ( उणा-३९७ ) इत्यर ॥ ९ ॥

पञ्चभद्रस्तु विप्लुत. ॥९८॥

व्यसनी

पञ्च भद्राणि कल्याणानि अस्य पञ्चभद्रोऽभद्र, विपरीतलक्षणया भद्रमुखवत् ॥ १ ॥ विप्लवते स्म विप्लुत ॥२॥९८॥ द्यूतपरस्त्रीप्रमुखाणि व्यसनान्यस्य सन्ति व्यसनी ॥ ३ ॥

हर्षमाणस्तु प्रमना हृष्टमानसः ।

विकुर्वाणः

हर्षति इत्येवशीलो हर्षमाण "वय शक्ति " ॥ ५ । २ । २४ ॥ इति शान' ॥ १ ॥ प्रहृष्ट मनोऽस्य प्रमना ॥ २ ॥ हृष्ट मानसमस्य हृष्टमानस ॥ ३ ॥ हर्षाद् विकारं याति विकुर्वाण ॥ ४ ॥

विचेतास्तु दुरन्तर्विपरो मनाः ॥ ९९ ॥

विरुद्धं चेतोऽस्य विचेता ॥ १ ॥ दुरन्तर्विभ्य परो मन शब्द दुर्मना, अन्तर्मना, विमना, दुष्टमन्तर्लीन विरुद्धं च मनोऽस्येति कृत्वा ॥ २॥३॥४॥९९ ॥

मत्ते शौण्डोत्कटक्षीबाः

मद्येन माद्यति स्म मत्तस्तत्र ॥ १ ॥ शुण्डा मदिरा तस्या भव शौण्ड, शुण्डाऽस्त्यस्य वा, ज्योत्स्नादित्वादण् ॥ २ ॥ उद्रिक्त उत्कट "संप्रोन्ने -" ॥ ७ । १ । १२५ ॥ इति कट, उत्क्रान्तकटीच्छादनो वा ॥ ३ ॥ क्षीबते क्षीब "अ-नुपसर्गा -" ॥ ४ । २ । ८० ॥ इति क्ते निपात्यते ॥ ४ ॥

उत्कस्तूत्सुक उन्मनाः ।

उत्कण्ठितः

उद्गत मनोऽस्य उत्क "उदुत्सो" ॥ ७।१।१९२ ॥ इति क ॥१॥ उद्गतं मनोऽस्य उत्सुक "उदुत्सोरुन्मनसि" ॥ ७।१।१९२ ॥ इति क ॥ २ ॥ उद्गत मनोऽस्य उन्मना ॥ ३ ॥ उत्कण्ठा सञ्जाताऽस्योत्कण्ठित ॥ ४ ॥ 'इष्टार्थोद्युक्त उत्सुक' इत्यमर पृथगाह ।

अभिशस्ते तु वाच्यक्षारितदूषिताः ॥ १०० ॥

अभिशस्यते स्माभिशस्तस्तत्र ॥ १ ॥ वचनीयो वाच्य ॥ २ ॥ क्षार्यते खरूपाच्चाल्यते स्म क्षारितोऽलीकोत्पन्नपातकव्यपदेश, आक्षारितोऽपि ॥ ३ ॥ दूष्यते स्म दूषित, मैथुनं प्रतील्येके ॥ ४ ॥ १०० ॥

गुणै प्रतीते त्वाहतलक्षणः कृतलक्षण. ।

आहतान्युद्घोषितानि लक्षणान्यस्य आहतलक्षण ॥ १ ॥ कृता प्रसिद्धा लक्षणरूपा गुणा अस्य कृतलक्षण ॥ २ ॥

निर्लक्षणस्तु पाण्डुरपृष्ठः

निर्गतानि लक्षणान्यस्य निर्लक्षण ॥ १ ॥ पाण्डुरं निर्लक्षणं पृष्ठमस्य पाण्डुरपृष्ठ ॥ २ ॥

संकसुकोऽस्थिरे ॥ १०१ ॥

सकसति संकसुक "संविभ्या कसे" ॥ ( उणा–५२ ) ॥ इत्युक ॥१॥ अस्थिरश्चपलस्तत्र ॥ २ ॥ १०१ ॥

तूष्णींशीलस्तु तूष्णीकः

तूष्णींभाव शीलमस्य तूष्णीक "तूष्णीक" ॥ ६ । ४ । ६१ ॥ इति के निपात्यते ॥ १ ॥ २ ॥

विवशोऽनिष्टदुष्टधीः ।

विरुद्धं वष्टि कामयते विवश, अनिष्टा दुष्टा च धीर्यस्य स तथा ॥ १ ॥

बद्धो निगडितो नद्ध कीलितो यन्त्रितः सित. ॥ १०२ ॥

संदानितः संयतश्च

बध्यते स्म बद्ध ॥१॥ निगड्यते निगडित ॥२॥ नह्यते स्म नद्ध ॥ ३ ॥ कील्यते स्म कीलित ॥ ४ ॥ यन्त्र्यते यन्त्रित ॥ ५ ॥ सीयते स्म सित ॥६॥ १०२ ॥ सदान्यते स्म सदानित ॥ ७ ॥ सयम्यते सयत ॥ ८ ॥

स्यादुद्दानं तु बन्धनम् ।

'दोच् छेदने' 'देंङ् पालने' वा उद्दीयते उद्दानम् ॥ १ ॥ बध्यतेऽनेन बन्धनम् ॥ २ ॥

मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः ॥ १०३ ॥

मनसि हतो मनोहत ॥१॥ प्रतिहन्यते स्म प्रतिहत ॥२॥ प्रतेर्बन्धि प्रवृत्त-निवारणार्थे, प्रतिबध्यते स्म प्रतिबद्ध ॥३॥ हन्यते स्म हत ॥४॥१०३॥

प्रतिक्षिप्तोऽधिक्षिप्तः

प्रतिक्षिप्यते स्म प्रतिक्षिप्त ॥ १ ॥ एवमधिक्षिप्त ॥ २ ॥

अवकृष्टनिष्कासितौ समौ ।

अवकृष्यते दूरीक्रियते स्म अवकृष्ट ॥ १ ॥ निष्कास्यते स्म निष्कासित, निस्सारित इत्यर्थ ॥ २ ॥

आत्तगन्धेऽभिभूतः

आत्तो गृहीतो गन्धोऽभिमानोऽस्य आत्तगन्धस्तत्र ॥ १ ॥ अभिभूयते स्माऽभिभूत ॥ २ ॥

अपध्वस्ते न्यक्कृतधिक्कृतौ ॥१०४॥

अपध्वस्यते स्म अपध्वस्तस्तत्र ॥ १ ॥ न्यक्क्रियते स्म न्यक्कृत ॥ २ ॥ धिक्क्रियते स्म धिक्कृत ॥ ३ ॥ आत्तगन्धादय पञ्चाप्येकार्था इत्येके ॥ १०४ ॥

निकृतस्तु विप्रकृतः

निक्रियते खलीक्रियते स्म निकृत ॥ १ ॥ एवं विप्रकृत ॥ २ ॥

न्यक्कारस्तु तिरस्क्रिया ।

परिभावो विप्रकारः परापर्यभितो भवः ॥ १०५ ॥

अत्याकारो निकारश्च

न्यक्करणं न्यक्कार ॥ १ ॥ तिरस्करणं तिरस्क्रिया ॥ २ ॥ परिभवनं परिभावो बाहुलकाद् घञ् ॥ ३ ॥ विप्रकरणं विप्रकार ॥ ४ ॥ परापर्यभिभ्य परो-

॥ अर्हम् ॥

# यशोविजयजैनग्रन्थमाला

नाम

संस्कृतप्राकृतभाषयोर्नानाविधप्राचीनकाव्यनाटकच्छन्दो-
ऽलङ्कारव्याकरणन्यायज्यौतिषादिग्रन्थानां संग्रहः ।

शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरिपादा-
म्भोजचञ्चरीकायमाणाभ्यां
श्रावकपं०-हरगोविन्ददास-बेचरदासाभ्यां संशोधितः ।

२२-२३.

स्याद्वाद्यागमवीचिमालिविलसत्-संसूक्तिमुक्तावहा
प्रौढप्रातिभपूर्वसूरिनिशित-प्रेक्षागुणैर्योजिता ।
एषाऽनन्यसुविज्ञधर्मविजयाचार्य-प्रसादाच्छुभा
विज्ञानं प्रतिमासमाकलयतु श्रीग्रन्थमाला सताम् ॥ १ ॥

*Printed and Published by Shah Harakhchand Bhurabhai
at The DHarmabhyudaya Press, Benares city.*

वार्षिकमूल्यं रूप्यकाष्टकम् ।

# विषयानुक्रमः ।







अर्हम्

श्रीविजयधर्मसूरिभ्यो नमः ।

श्रीसोमचारित्रगणिविरचितं

# गुरुगुणरत्नाकरकाव्यम् ।

श्रेयःश्रीधर्मबीजं विमलमतिबृहद्भारतक्षेत्रधात्र्यां
येनोप्तं यद् युगादौ तदनु निजलसद्गोरसैः सिक्तमेतत् ।
प्रौढिं च प्रापि तज्ज्ञैः सुकृतगुरुगणैः स्वाऽऽश्रितेऽद्यापि दद्या-
दाधिव्याधिव्यपायं परमसुखफलं नाभिसूः स्तात् स सिद्ध्यै ॥१॥

स्वामिन् ! शीर्षं ममर्क्षे मृगशिरसि समस्त्यक्षियुग्मं मृगाक्ष्या-
मेणाङ्के मेऽङ्गमास्ते तदनु मृगमदे नाभिरेतच्चतुष्कम् ।
प्राणेष्टं प्रापयैभ्यः किमिति कृतकृपं प्राक्कपोताऽऽवकं यं
विज्ञीप्सुर्लक्ष्मलक्षाद् मृग इह भजते शान्तये स्तात् स शान्तिः ॥२॥

आबालब्रह्मचारी मधुररवकलापीनगत्यद्भुताङ्गः
स्वामी सानन्तशक्तिः परमहितहरो-रागमानास्यहृद्यः ।
युक्तं ख्यातः शिवाङ्गोद्भव इह कुतुकं तच्च यच्छम्भुनाथः
श्रीनेमिः शाश्वतं वः सृजतु सुखमसौ सन्नमद्दानवारिः ॥३॥

दृष्ट्वा यत्कायभासा समवसृतिरसां सर्वतो नीलवर्णा-
मर्वाणः सप्त भानोरिह हरितयवक्षेत्रविभ्रान्तिभाजः ।
साक्षात् तद्रक्षणाय स्फुटकपटधरा यद्वचोऽम्भश्च पातुं
प्रापुः पायात् स पार्श्वप्रभुरभिनमतोऽभीष्टभर्तृप्रभावः ॥४॥

भानीवाऽऽभान्ति यस्मिन् मुनिनयनमिता धर्मचारित्रभेदा-
स्तत्त्वान्युद्यद्ग्रहा वा नव तरणिमिता राशयश्च व्रतानि ।

ताराराज्यश्च सूरिप्रभृतिकृतिगुणा यत्त्वसंख्यर्षि चित्रं
ज्योतिश्चक्रायते तत् प्रवचनमनघं यस्य वीरः श्रिये सः ॥५॥
सौपर्णेयोपमां ये निदधति विनतानन्दना विश्वरूपा-
ऽऽधाराङ्गाऽधःकृताष्टापदनगवसवः स्वामिनः सत्कवीनाम् ।
न-व्या-धामेहमेधाविधुतबहुविधाऽधर्मकर्माद्रिजिह्वाः
सर्वे सार्वाः श्रितानां ददतु दिततमःशर्मधर्मप्रकाशम् ॥६॥
स्वोद्यत्पादैस्तदाऽष्टापदजिदपि किलाऽष्टापदं यः पवित्री-
चक्रे तैर्ज्ञानमात्मन्यसदपि च ददौ केवलं तापसेभ्यः ।
योगीन्द्रैरुज्ज्वलान्तःकरणसरसिजध्येयसन्नामधेयः
श्रीलब्ध्यम्भोधिराशाः सफलयतु स वः श्रीगुरुर्गौतमाह्वः ॥७॥
स्तुत्या येऽमर्त्यतत्या बलविजयपरा नाऽकभाजः सुधर्माऽ-
लङ्कारा गौरवर्णा वरविभवसुधाभुक्सभाऽऽप्तप्रभुत्वाः ।
इन्द्रायन्ते कवीन्द्राः किल सततममी भूभृतो रञ्जयन्तो
यस्याः सान्निध्यतः सा कलयतु कविताकौशलं शारदा मे ॥८॥
( स्रग्धराच्छन्दोनिबद्ध नमस्कारकाव्याष्टकम् )

चेतस्कामितमातनोति कृतिनां यत् स्मर्यमाणं यतः
स्युर्देशेष्वखिलेष्वमी मुनिवरा मान्या यदादानतः ।
तन्नामाऽपि ततः सुरद्रुमसमं येषां जने गीयते
तेभ्यः श्रीगुरुसोमसुन्दरतपागच्छाधिपेभ्यो नमः ॥ ९ ॥
श्रीजैनेश्वरधर्मनिर्जरतरुः काले कलावप्यसौ
यद्वाक्सौधरसेन नित्यमधुना संसिच्यमानः सताम् ।
वाञ्छायोग्यफलानि यच्छति, तपागच्छाधिपाः श्रीयुता-
लक्ष्मीसागरसूरयश्चिरमिमे मे सन्तु सन्तुष्टये ॥ १० ॥
श्रीलक्ष्मीसागरगुरुभाग्यादिगुणालिवर्णनवरेण्यम् ।

नव्यं करोमि काव्यं गुरुगुणरत्नाकरं नाम ॥ ११ ॥

ये श्रीमज्जिनशासनार्णवसमुल्लासैकजैवातृका-
राजन्तेऽत्र युगे युगोत्तमगुरुप्रख्यप्रभावात्मकाः ।
स्तोष्ये हर्षवशादशेषसुदृशामिष्टार्पणप्रत्यलान्
लक्ष्मीसागरगच्छनायकवरानेतान् गुणैरुज्ज्वलान् ॥ १२ ॥

रत्नैरम्बुधिवद् गुणैर्बहुविधैर्येऽलङ्कृता यैरलं
नाऽलं स्याद् नवितुं हि तान् मम मतिस्तन्वी समस्तानपि ।
एकस्तेषु विशिष्य यो विजयते सौभाग्यनामा गुणो
वर्धिष्णुः सततं स्तुवे तदपि तं विश्वत्रयीविश्रुतम् ॥ १३ ॥

येषां श्रीपुरुषोत्तमत्वसजुषां ताम्यत्तमोविद्विषां
लक्ष्मीसागरगोत्रसंश्रितिरभून् तत्सांप्रतं सांप्रतम् ।
यन्नामस्मृतिमात्रतोऽपि परितः सर्वार्थसंपज्जुषा-
मन्येषामपि बोभवीति भविनां मेषाऽद्भुतं भूतले ॥ १४ ॥

यत्कः प्राश्वत्प्रतापः सवितुरतिशयी भूर्भुवःस्वःप्रकाशी
येषामास्ते यशोऽपि ज्ञपितुरभिनवं तामसध्वंस्यदोषम् ।
मुक्तापङ्क्तेर्यदीया गुणततिरधिका छिद्रमुक्ताऽपि तन्या-
द्यन्नृणां कण्ठकान्तिं तदिह सुगुरवः केन तुल्याः स्युरेते? ॥ १

अथैषा श्रीगुरूणामुत्पत्तिस्थानदेशपुरपितृमात्रादिवर्णनम्–

अभ्युद्यद्विषयोन्नताऽतनुमहःपूरा शिवप्रश्रया
या दीव्यन्नयनाऽथ मानवमता रैमौक्तिकाऽलङ्कृता ।
धत्ते मर्त्यसुखाकरं भवहरं श्रीगूर्जरत्राङ्गना
श्रीवाणीविलसद्विवेकपुरुषाऽऽश्लेषाद् वृषाख्यं सुतम् ॥ १६

तस्याः कोमलकाश्यपीशशिमुखीवक्षःस्थलालङ्कृति-
र्ग्रामः स्वर्मदमर्द्दमापुरमिति स्वाढ्यालयादिश्रिया ।

जीवत्स्वामियुगादिवीरजिनपप्रासादपुण्योत्सव-
प्रह्वश्राद्धसमृद्धवृद्धनगरासन्नः समस्तीह यः ॥ १७ ॥
मित्रप्रीतिपरायणः समकलाशाली सुवृत्तालयो
धाम्नाऽऽढ्यो महता-रजन्यरहितो यो निष्कलङ्कः कलौ ।
बिभ्रच्चारुवृषोच्चतां दिततमा नालीकसंपद्वरः
प्राश्वत्पार्वणरोहिणीरमणवद् देदीप्यमानः सना ॥ १८ ॥
सर्पद्द्वेषिशिलीमुखाऽक्षिततनुप्रोद्भूततेजोभर-
भ्राजच्चम्पकराजधीसखवरः सङ्घेश्वरः श्रीधरः ।
ऊकेशान्वयपद्मभास्वदुदयः श्रीकर्मसिंहाह्वयः
श्राद्धस्तत्र वसत्यसौ सुहृदयप्राणिप्रणीतप्रियः ॥ १९ ॥
( युग्मम् )

या गङ्गावदपङ्कपुण्यभवनाङ्गा शुद्धगोत्रोद्भवा
रम्भावत् कमनीयरूपकलिता कामं कुसङ्गोज्झिता ।
ब्राह्मीवत् परमेष्ठिजापरतताऽवाप्तेष्टविद्याकला
लक्ष्मीर्वाङ्गजवत्यथाऽर्थिनिचये मिष्टान्नपानप्रदा ॥ २० ॥
मुक्तालीकलयोरुहारलतया तुल्या गुणैः सज्जया
पद्मिन्याप्ततुलाऽचलातिमृदुला पद्माकरैकालया ।
शीलर्द्धिः सुलसेव देवसुगुरुश्रद्धेद्धभक्त्यावहा
कर्मादेव्यभिधा बभस्ति सुभगा चैतस्य सा प्रेयसी ॥२१॥
( युग्मम् )

नीरोगाङ्गरमादिकाऽमितसुखं भुञ्जानयोरेतयो-
र्जज्ञे सूनुरनूनलक्षणरुचिः सुस्वप्नसंसूचितः ।
यावत्तावदतुच्छमुत्सवमसौ श्रीकर्मसिंहः पिता-
ऽकार्षीच्च स्वजनाङ्गनाऽऽवलिरलं वर्धापनाऽऽढ्यं विधिम् ॥२२॥

अपि च–

श्रीमद्विक्रमतोऽब्धिरागदिगिरासंख्याधरे वत्सरे
मासे भाद्रपदे प्रदोषसमये कृष्णद्वितीयातिथौ ।
अश्विन्याह्वयभे तथा सति शुभे लग्नेऽत्र कुम्भाभिधे
जन्माऽजायत यस्य कस्य न विशः स स्यात् प्रशस्यः शिशुः॥२३

अथाऽस्य नामस्थापना–

अत्राऽयं भविता क्षमाधरमहाश्रीपक्षपातक्षमः
सेव्यः सद्विबुधैः सुधीर्नवसुधाभोगस्पृहः प्रत्यहम् ।
मत्वैवं किमु देवराज इति तन्नामाऽस्य निर्मापितं
धात्रा तातकृताऽतिविस्तरवरस्वज्ञातिवात्सल्यतः ॥ २४ ॥

पित्रादेः प्रथयन्नथैष पृथुकः प्रेमाऽप्रमं पञ्चधा
धात्रीभिः परिलालिताङ्गलतिकः सन् वर्धमानोऽनिशम् ।
लावण्यादिगुणाश्रितश्चतुरवाग्युग् देवराजः प्रजा-
ऽऽप्यायी सप्तसमावयाः समभवद् यावद्विवेकोदयः ॥ २५ ॥

तावत् सोत्सवमानयद् विनयिनं तं लेखशालां पिता
तत्रार्यद्विजसन्निधौ समकलाविद्यास्वधीती धिया ।
शश्वद्देवगुरुप्रणामनिपुणः पुण्यस्पृहः प्राप्तवान्
साधूपाश्रयमश्रमं पठितवानत्राऽऽर्हतं च श्रुतम् ॥ २६ ॥

( युग्मम् )

शृण्वानस्य सनाऽस्य नैकशमिनां श्रेयस्विनी देशनां
सर्वं वैषयिकं सुखं विषसमं संपश्यतः संसृतौ ।
उत्पन्नं स्वमनस्यनेनसि भृशं वैराग्यमभ्रंशकं
दीक्षाऽऽदानमनोरथस्तदभवद् दक्षस्य बाल्येऽप्यहो ! ॥ २७ ॥

पित्रोर्ज्ञापितवान् यदाऽऽशयमिमं स्वं देवराजस्तदा

वत्स ! त्वं मृदुसंवरोऽसि चरणाऽऽदानं त्विदं दुष्करम् ।
भुङ्क्ष्व श्रीयुवतीमुखं भवसुखं ह्येतद्ग्रहे वासरो-
ऽस्माकं सम्प्रति यं प्रतीति वचनं स्नेहेन तौ प्राहतुः ॥२८॥
भिन्नं नास्य मनो मनागपि गिरा पित्रोरमुष्यन्मते-
र्यच्चातुर्यचमच्चरीकृतकृतिव्राताऽद्वितीयाकृतेः ।
प्रव्रज्योत्कलिकावतः कलिकलाकेलीप्सितप्रच्युते-
स्तत्केन क कदाऽन्वदायि शिवदा सैतन्मयाऽऽख्यायते ॥२९॥
अत्रास्य व्रतदातॄन् श्रीमुनिसुन्दरमुनीश्वरान् यावत् ।
अथ कथयामि कति श्रीगच्छपतीन् गौतमप्रभृतीन् ॥ ३० ॥

तथाहि–

यच्चिन्तामणिवच्चिनोति कृतिनां यच्चिन्तितार्थप्रथां
श्रीपृथ्वीवसुभूतिभूस्तदुचितं चञ्चत्प्रभावाञ्चितः ।
चित्रं श्रीगणधार्यपीह विदितो निर्ग्रन्थनाथाऽग्रिमः
श्रीवीरान्तिषदादिमः सुखयतात् स्वामी स नो गौतमः ॥३१॥
सेवासङ्गतशक्रमुख्यसुमनाः श्रीनन्दनाद्याःतता-
रामैकक्षितिभूतकामितकरश्रीकल्पगच्छस्थितिः ।
धर्ता काञ्चन–सम्पदं गिरिगुरुर्मेरूपमां यः श्रितः
श्रीवीरस्य स पञ्चमो गणधरः सिद्ध्यै सुधर्माऽभिधः ॥३२॥
मुक्ताष्टापदकोटिनाटकरसप्रेङ्खत्कुमारीस्पृहः
सर्वज्ञोऽप्यथ यः किलेह विदितः स्वामी महानन्दभूः ।
श्रीजम्बूप्रभवादिबोधनपरः पुष्यात् सुखं वः सदा
वीरादन्तिमकेवली स च चतुःषष्ट्याऽभवद् वत्सरैः ॥३३॥
सूरीशप्रभवः प्रणाशितभवः शय्यंभवः श्रीयशो-
भद्रः सान्द्रयशोमयश्च विजयः सम्भूतितः सूरिराट् ।

भद्राद् बाहुरुपद्रवत्रुटिपटुः श्रीस्थूलभद्रप्रभुः
षट् त्वेते श्रुतकेवलादधिगतत्रैलोक्यभावा बभुः ॥ ३४ ॥
त्रैकाल्यार्थविदो महागिरिसुहस्त्याद्या घना जज्ञिरे
वज्रान्ता दशपूर्विणो जिनमतोद्द्योतोद्यताः सूरयः ।
वज्रस्वामिविनेयवृन्दवृषभः श्रीवज्रसेनस्तत-
श्चत्वारश्च युगप्रधानयतिपास्तस्याऽपि शिष्या इमे ॥ ३५ ॥
श्रीनागेन्द्रसुचन्द्रनिर्वृतिवरा विद्याधरश्चेति त-
त्तेभ्यो वेदमिताः समुन्नतिमिताः शाखास्तदीयाख्यया ।
तासामन्तरसंख्यसाधुविसरैर्विस्तारमाप्ताऽवना-
वस्तोकास्तिककल्पिताऽतुलवृषा शाखाऽस्ति चान्द्री चिरम्॥३६॥
( युग्मम् )
तस्यां भूरिषु सूरिषु त्रिभुवनख्यातेष्वतीतेष्वभूद्
यो गच्छप्रभुरद्भुताऽतिशयभृद्विद्याब्धिरुद्द्योतनः ।
स प्रापाऽर्बुदसन्निधौ वटतले दृष्ट्वा मुहूर्तं शुभं
तत्राऽष्टौ गणपानतिष्ठिपदथो यत् तद् वटाऽऽह्वो गणः ॥ ३७ ॥
आद्यस्तेष्वथ सर्वदेवसुगुरुस्तस्याऽप्यनेकेऽभवन्
सन्ताने भुवनेऽतिशायिचरिताः श्रीदेवसूर्यादयः ।
धर्मोद्धारधुरन्धरा गणधरास्तेभ्यः क्रमाद् विक्रमाद्
ब्रह्माशार्यमहायने गुरुजगच्चन्द्राख्यसूरीश्वराः ॥ ३८ ॥
आचामाम्लतपो द्वियुग्दशसमास्तेपे क्षमापेशलै-
र्यैस्तन्नाम तपा इति क्षितिभृता येभ्यः प्रदत्तं तदा ।
तेभ्यश्चैष तपागणो गुरुजगच्चन्द्रप्रभुभ्यस्ततः
सेव्यः श्रावककोटिभिर्वटगणादासीदसीमोदयः ॥ ३९ ॥

अथ च—

श्रीदेवेन्द्राभिधगणधराः श्रीजगच्चन्द्रशिष्याः

कर्मग्रन्थप्रमुखविविधग्रन्थगुम्फास्तयासन् ।
पीयूषाभां मुषितकलुषां यत्कभाषां निपीय
प्राप प्रीतिं पुलकितवपुर्वस्तुपालादिसङ्घः ॥ ४० ॥
मृद्वर्यायां जिनमतभुवि प्रादुरासीच्च येषां
वाग्वार्योगात् परमदलभूर्धर्मशालालतैषा ।
नव्या भव्याऽचलसमशमप्रायकायाऽपि लघ्वी
तुच्छो गच्छोऽप्यजनि किल यत्सङ्गतो वर्धमानः ॥ ४१ ॥
( युग्मम् )

विद्यानन्दश्रमणपतयस्तद्विनेयास्त्वभूवन्
पट्टे तेषामथ गणधरा धर्मघोषाभिधास्ते ।
पीत्वा पृथ्वीधरसचिवराड् गोरसं स्राग् यदीयं
दीप्रं शम्भुप्रभुवृषमहो ! पुण्यकार्यैः पुपोष ॥ ४२ ॥
शाकिन्यादेरशिवविसरोऽवारि विद्यापुरे यै-
र्जिग्ये योगी स्वकपरिकरक्षुद्रकार्युज्जयिन्याम् ।
शुद्धध्यानात् सलिलनिधिनाऽदर्शि रत्नं च येषां
तेषां विद्वानपि नु कवयेत् कोऽवदातान् प्रभूतान् ? ॥ ४३ ॥
( युग्मम् )

गोविज्ञातोदयमयकलावत्प्रसिद्धौ निदानं
शुद्धा येषां प्रतिपदभवद् नव्यमाऽन्याऽद्भुतं तत् ।
ते श्रीसोमप्रभगुरुवरा रेजिरे धर्मघोष-
प्रेङ्खत्पट्टोदयशिखरिणि द्वादशात्माऽनुकाराः ॥ ४४ ॥
मुक्त्वाऽष्टादशकूटभावकलितान् ये दोषटङ्कान् भवे
हट्टेऽस्माद् जगृहुर्महागुणमणीन् षट्त्रिंशतं त्वोजसा
ख्याता वीतवशास्तथाऽपि किल ते सोमप्रभाचार्यस-

स्पट्टाऽलङ्कृतयोऽत्र सोमतिलका भट्टारका भ्रेजिरे ॥ ४५ ॥
सूरीन्द्रानणहिल्लपाटकपुरे यान् गुङ्गडीपल्वलो-
पान्तस्थान् प्रणतः समोदमुदयीपा नाम योगी तदा ।
पृष्टः श्राद्धवरैरवक् स च ममेत्युक्तं हि सिद्धिप्रदा-
अत्रैते पुरुषोत्तमाः कणयरीपाख्येन नाथेन तत् ॥ ४६ ॥
श्रुत्वेति योगिगदितं मुदितैरशेषैः
सङ्घैर्विशेषतरभक्तिरकारि येषाम् ।
तेऽवाप्तसोमतिलकाऽमलपट्टपद्माः
श्रीदेवसुन्दरगणप्रभवो बभूवुः ॥ ४७ ॥

अथ परमगुरुश्रीसोमसुन्दरसूरीश्वराणां कतिपयगुणवर्णनम्-

सुरनरविभुवन्द्यश्रीजयानन्दसूरि-
प्रवरकरसरोजात् संमदात् सोत्सवं यैः ।
रुचिरचरणलक्ष्मीरात्मसाद् निर्ममेऽद्रि-
ज्वलनजलधिधात्रीवत्सरे विक्रमार्कात् ॥ ४८ ॥
तदनु निजतनोर्ये यत्यजेयं प्रमाद-
द्विषमतुषमनीषोत्कर्षतोऽपास्य दूरम् ।
बभुरिह गुरुराजज्ञानयुक्सागराङ्गा-
ऽस्मयविनयसपर्याऽवाप्तविश्वाप्तविद्याः ॥ ४९ ॥
अपहृतभवितापाः पुण्यपद्माकरा ये-
नवमरसकलापा नीरजस्थित्युदाराः ।
सततमऽधुरऽनेकोच्चागमानद्भुतं तद्
मधुपमुखपतद्भिर्नानुषङ्गं त्वकार्षुः ॥ ५० ॥
तुरगशरगवांऽह्रिक्ष्मामिते विक्रमाब्दे
गणधरपदमापुः पत्तने गूर्जरोर्व्याम् ।

करसरसिरुहा श्रीदेवयुक्सुन्दराणां
नरवरनरसिंहाऽऽरब्धरम्योद्धवैर्ये ॥ ५१ ॥
गुरुधरणविहाराद्यार्हतोत्तुङ्गगेहाः
सपदि यदुपदेशात् कारिताः श्रावकेन्द्रैः ।
व्यरचि शुचिमहौघैर्यैश्च तारङ्गकादा-
वजितजिनमुखार्हद्बिम्बलक्षप्रतिष्ठा ॥ ५२ ॥
गृहिविहितमहीयोविस्तरैः स्थापिता यै-
रमरफलदमानाः सूरयो वाचकाश्च ।
विबुधगणिपदानि प्रापिता दीक्षिता ये
गुरुसदृगपि तेषां वेत्ति संख्यां न कोऽपि ॥ ५३ ॥
कति यतिवृषभा यद्देशनादुग्धपानाद्
विजनविपिनवासं शिश्रियुः कष्टकृत्यै ।
अभवदतितपस्वी चाऽन्यचारित्रिराशि-
श्चरमजिनतपस्कृत् शान्तिचन्द्राख्यभिक्षुः ॥ ५४ ॥
अगणितगणयो यद्वारके सर्वविद्या-
प्रमथितपरमत्युन्मत्ततामीत्यभेद्याः ।
प्रतिपुरमतिमात्रश्रीभृतो भूपमान्या
व पुरि शुशुभिरे च श्राद्धवर्गा वदान्याः ॥ ५५ ॥
( मालिनीच्छन्दसा काव्याष्टकम् )
चारित्ररत्नजिनमण्डनहेमहंस-
श्रीसोमदेवसुसुधादिमनन्दनाद्याः ।
के वाचका गुरुधियः कति सूरयो वा
येषां विनेयविभवो बहवो बभूवुः ॥ ५६ ॥
ये योगशास्त्रलघुभाष्यगुरूपदेश-

मालादिकप्रकरणावलिबालबोधात् ।
कल्याणकादिविविधस्तवमुख्यशास्त्रा-
ण्यस्राक्षुरक्षितशमाः स्वपरोपकृत्यै ॥ ५७ ॥
संवेगरङ्गगुणितत्रिसहस्रसंख्य-
स्वाध्यायकाः प्रतिदिनं च निरीहनाथाः ।
निद्रोदयेऽपि विदधुः स्ववपुःप्रसारं
ये नाऽप्रमार्ज्य, यतना क विशीदृशी स्यात् ? ॥५८॥
आशादिपल्लिवसतिर्गुणराजनामा
यद्वाक्श्रुतेः सहवर्यैरकरोत् कृतीशः ।
देवालयैर्दशभिरस्तविमानमानै-
रूकेशमौलिरतुलां विमलादियात्राम् ॥ ५९ ॥
गोविन्दकारितगजाङ्कजिनप्रतिष्ठा
तारङ्गकेऽथ महती गुणराजयात्रा ।
यो देवराजजनितो मुनिसुन्दराणां
यद्दीयमानगणधारिपदे महश्च ॥ ६० ॥
निर्मापितं नगरराणपुरे यदुच्चं
चैत्यं चतुर्मुखमथो धरणास्तिकेन ।
यद्वारकेऽत्र करणीयचतुष्कमेत-
ज्जातं चमत्कृतिकरं चतुराङ्गभाजाम् ॥ ६१ ॥
(युग्मम्)

आकर्ण्य यद्गुणगणं गृहिणः प्रहृष्टा-
लेखेन दुष्कृततीरतिदूरदेशात् ।
विज्ञाप्य केऽपि कृतिनः परपक्षिभाजोऽ-
प्यालोचनां जगृहुरास्यकजेन येषाम् ॥ ६२ ॥

श्रीगौतमप्रतिमतां दधतां विधूता-
न्तर्विद्विषां परमशर्मजुषां च येषाम् ।
नामस्मृतेरपि भवेद् भविनामभीष्टा
सर्वार्थसिद्धिरधुनाऽपि सुधर्मभाजाम् ॥ ६३ ॥

( सिंहोद्धताच्छन्दसा काव्याष्टकम् )

यो यो व्यधायि त्वयि मृत्युपाशो-
मया तवाऽयात् स स निष्फलोऽभूत् ।
तन्मेऽपराधं क्षमिराट् ! क्षमस्वा-
ऽऽचार्यो जरीयानिति कश्चिदाख्यत् ॥ ६४ ॥

यत्कारितं मनोरमकल्पद्रुमनामपार्श्वजिनबिम्बम् ।
खीमाईश्राविकया प्रतिष्ठितं यैश्च तदतिमहत् ॥६५॥

इत्याद्यद्भुतपुण्यकारणचणाः सम्यग्गुरूद्यद्गुणाः
ये दोषैरखिलैरनाप्तनवस्त्वौन्नत्यभृत्साधवः ।
ते श्रीसुन्दरदेवसुन्दरमहापट्टप्रभावावहाः
सर्वेष्टा गवि सोमसुन्दरवरा रेजुर्गणाधीश्वराः ॥६६॥

अथ श्रीमुनिसुन्दरसूरीश्वराणा सर्वगुणसंपूर्णानामपि
कियद् गुणवर्णनम्-

अध्यात्मकल्पद्रुमवल्गुगुर्वा-
वलीविचित्राऽऽप्तपतिस्तवादीन् ।
ग्रन्थान् बहून् ग्रेथुरजिह्ममत्या
येऽपास्तवाचस्पतिदर्पदीप्त्या ॥ ६७ ॥

श्रीसूरिमन्त्रस्मरणाऽतिशेषात्
षष्ठाष्टमादेश्च तपोविशेषात् ।
प्रत्यक्षतामाययुरार्यपद्मा-

वत्यादिदेव्यः प्रमदेन येषाम् ॥ ६८ ॥
निर्माय यैः शान्तिकरं स्तवं नवं
निवारिता मारिरिहाऽतिदुस्तरा ।
ध्यानात्तथा तिड्डभरेतिरऽञ्जसा
जाग्रद्गुणैर्जैनमतप्रभावकैः ॥ ६९ ॥
पीयूषयूषमधुरात्मगिरा दुरन्त-
माऽऽनेमुषामिह विमोहविषं हरन्तः ।
भव्योत्सवं भुवि विहारविधिं सृजन्तः
श्रीमानतुङ्गगुरुवन्महिमर्द्धिमन्तः ॥ ७० ॥
सत्क्षुल्ललाभमनिभश्रुतसंविदेकाऽऽ-
लोकात् समीक्ष्य मुनिसुन्दरसूरिराजाः ।
स्वाश्रय्युमापुरमुमापुरनामधेयं
ग्रामं क्रमादनुपमं तमुपागमंस्ते ॥ ७१ ॥
( युग्मम् )

प्रीतस्ततस्तत्र स कर्मसिंह-
स्तेषां प्रवेशोत्सवमाश्वकार्षीत् ।
संमानतो मेलितसङ्घराशेः
सद्वस्त्रैरैटङ्कककदानपूर्वम् ॥ ७२ ॥

इतश्च—

फलवानद्य मनोरथमरुत्तरुर्मे फलेग्रहिस्त्वजनि ।
जनिरपि यदत्र पादावधारिताः सन्ति सद्गुरवः ॥ ७३ ॥
ध्यात्वेति देवराजः समुद्ववन्दे स ताननूचानान् ।
प्रददत मे व्रतमतनोदिति विज्ञप्तिं च तत्पुरतः ॥ ७४ ॥
दीर्घायुर्धीधर्मश्रीशर्मदमुख्यपूर्णरेखाढ्यम् ।

करतामरसं तावच्चैरस्य निरीक्षितं नितराम् ॥ ७५ ॥
सर्वाङ्गचङ्गिमानं कुमारमिममीक्ष्य तदनु ते यतिपाः ।
भावी गुरुपदवीभागयमेवं भावयामासुः ॥ ७६ ॥
दापयताऽस्य तपस्यां सुतस्य भोः ! आयतौ हि भवभेत्तुः ।
भवदादीनामिति ते जगुस्ततः कर्मसिंहाग्रे ॥ ७७ ॥
स तदा तान् प्रत्येतामदर्शयद् जन्मपत्रिकामस्य ।
दृष्ट्वा पुनराहुरमी इहाऽपि चारित्रयोगोऽस्ति ॥ ७८ ॥

| | | |
|---|---|---|
| १२ श. / १रा. चं | ११ | १० / ९ |
| २ | श्री. | ८ |
| ३ बृ / ४ | ५ शु. | ७ बु के / ६ मं र. |

तदपि पिता नाऽनुमतिं व्रतदानेऽदादमुष्य स ततोऽवक् ।
खेदकृदेतद्विषये जननीं प्रति देवराजसुधीः ॥ ७९ ॥
कीदृगयं भविताऽग्रे तयेति पृष्टे त्ववादि गुरुभिस्तैः ।
श्रीगणपतिरिति मुदिता दत्तवती सा क्षमाश्रमणम् ॥८०॥
( आर्य्याऽष्टकेन कुलकम् )

ततश्च—

ग्रामादितः सपदि सङ्घदृढाऽऽग्रहेण
प्राप्तेषु पत्तनममीषु शमीश्वरेषु ।
ग्रामान्तरं गतवति स्वपतौ च कर्मा-
देव्यप्यगात् सममनेन सुतेन तस्मिन् ॥ ८१ ॥
पूज्याः ! प्रयच्छत जवाद् वरसंयमं मे-

ऽत्राऽपि प्रणम्य च गुरून् अमुनेत्थमुक्ते ।
ते पत्तनादपि निदानपुरं तदानी-
मीयुर्जिनाऽभिनमनाय तदन्तिकस्थम् ॥ ८२ ॥
तत्राम्बया बहुधनैरनया प्रणीते
कान्तक्षणे सुकृतिसन्ततिसाक्षिकं तैः ।
दीक्षा ददेऽस्य मुनिसुन्दरसूरिपादै-
रब्देऽम्बराऽम्बुनिधिवेदविधुप्रमाणे ॥ ८३ ॥
लक्ष्मीवदत्र भविकाऽमितसातदाता
गम्भीरतादिगुणरत्नरमारतिश्च ।
भाव्येष सागर इवेति विभाव्य लक्ष्मी-
युक्सागरेति विदधेऽस्य ततोऽभिधा तैः ॥ ८४ ॥
( चतुर्भि कलापकम् )

अथैषां श्रीलक्ष्मीसागराणा गणिपण्डितवाचकपदप्राप्तिसमयकथनम्—

भक्त्याऽऽदरेण मुनिसुन्दरसूरिराजां
पार्श्वे प्रसन्नमनसां परभागभाजाम् ।
सिद्धान्तमुख्यसमवाङ्मयमल्पकालं
ये ह्यध्यगीषत विशुद्धधिया रसालम् ॥ ८५ ॥
सत्तर्कवादकविताकरणैकतानै-
रुत्तार्य्य मानविषमाऽऽशु वचोवितानैः ।
दुर्वादिनां शिशुदशा अपि जीर्णदुर्गे
येऽरञ्जयन्नरपतीन् महिपालमुख्यान् ॥ ८६ ॥
षड्जीवकाययतनारचनापवित्रं
येऽपालयन्ननतिचारचयं चरित्रम् ।
नित्यं चिरन्तनमुमुक्षुवदप्रमत्ता-

बाह्यान्तरङ्गरिपुपङ्क्त्यनुपात्तचित्ताः ॥ ८७ ॥
विश्रामणादिविनयप्रतिपत्तिकृत्या
सत्यापनं विदधतः शुचिसंयतानाम् ।
प्रापुः क्रमेण गणिनाम पदं विवाह-
प्रज्ञप्तियोगवहनात् समहामहं ये ॥ ८८ ॥
श्रीसोमसुन्दरगुरुप्रवरैः प्रदत्तं
येभ्यः सुपण्डितपदं प्रथिते महेऽत्र ।
आगत्य देवगिरितः कृतिना महादे-
नाम्ना महीयसि रसग्रहदिग्रसाऽब्दे ॥ ८९ ॥
मुण्डस्थलेऽथ मुनिसुन्दरसूरिभिर्यै-
र्ये स्थापिता तदनु वाचकतापदव्याम् ।
भीमेन सङ्घपतिना निजबान्धवेना-
ऽऽरब्धोद्भवे विधुवियद्रसुधाऽङ्कवर्षे ॥ ९० ॥
श्रीसोमसुन्दरगुरूत्तमपट्टपद्म-
प्रद्योतना गणधरा मुनिसुन्दराख्याः ।
श्रीलक्ष्मिसागरवरैरथ वाचकैस्तै-
स्ते चक्रिरे परिवृता नहि केषु हर्षम् ?॥ ९१ ॥
( सप्तभिः कुलकम् )

अथ श्रीजयचन्द्रसूरिश्रीजिनकीर्तिसूरिश्रीविशालराजसूरिवर्णनकणः–

याम्याऽऽदिदिग्मिलितदुर्मदवादिभट्टा-
न्निर्धाट्य तर्ककविताक्षतियुक्तिपङ्क्त्या ।
ये लेभिरे बिरुदमिभ्यसभासमक्षं
तैरेव तूक्तमिह कृष्णसरस्वतीति ॥ ९२ ॥
चन्द्रार्कदीप्रतरकीर्तितपःप्रतापाः

पापप्रणाशनिपुणाः प्रणतप्रजानाम् ।
धीराऽजिताश्च मुनिसुन्दरसूरिपट्टे-
ऽजायन्त तेऽत्र जयचन्द्रगणाऽधिराजाः ॥ ९३ ॥
( युग्मम् )

संवेगतो गुणदृढं सकुटुम्बकैर्यै-
राश्रित्य संयममधीत्य च सत्यविद्याः ।
मुक्त्यर्थमेव विहितान्यतिदीर्घशास्त्रा-
ण्युच्चश्रियेऽत्र जिनकीर्तियतीश्वरास्ते ॥ ९४ ॥
येऽलङ्कृतिव्रजकृतप्रमदाधिकश्री-
गोपीवरास्तदुचितं हि सुविश्वरूपाः ।
यत्कृत्तदर्पकरमाः कुतुकं तु तत् ते
चक्रुर्न कस्य यतिराजविशालराजाः ? ॥ ९५ ॥

अथ परमगुरुश्रीरत्नशेखरसूरिवर्णनम्-

ये वेदरादिषु पुरेषु पटिष्ठभट्ट-
चेतोमरट्टमपहृत्य वचःप्रपञ्चैः ।
शीर्षेष्वशेषविदुषां विदधुर्बुधेशा
बाल्येऽपि सार्थकमहो ! निजनाम मेध्यम् ॥ ९६ ॥
ग्रन्थान् प्रतिक्रमणसूत्रविवृत्तिवीत-
रागस्तवाऽऽस्तिकविधिप्रमुखान् प्रशस्यान् ।
येऽरीरचन्नथ च विश्वजनीनचित्ता-
श्चातुर्यवद्वचनरञ्जितनागरेभ्यः ॥ ९७ ॥
सन्देहसंहतिहलाहलहारिणो ये
सद्देहिनामऽतमसो विमलान्तरङ्गाः ।
साम्यं मणेरऽधुरऽगण्यरुषादिदोषाऽऽ-

३

भोगालिमालिकलिकुण्डलिमौलिकोटौ ॥ ९८ ॥

यद्दीक्षिताः कतिपये यतयो भजन्ते-
ऽनूचानवाचकपदान्यधुना सुधीनाः ।
ये पण्डिताश्च गणयो गरिमाऽभिरामा-
स्तेषां तु कोऽपि गणनाभणनाय नाऽलम् ॥ ९९ ॥

सर्वाद्भुतश्रुतधरा अपि विश्रुता ये
कामोद्भवा अपि च नित्यमनङ्गनाशाः ।
भान्ति स्म तेऽत्र जयचन्द्रगणेन्द्रपट्टे
श्रीरत्नशेखरवरास्तपगच्छनाथाः ॥ १०० ॥

( पञ्चभि कुलकम् )

सङ्घाग्रहादथ विहारविधानतस्ते
सूरीश्वरा बहुपुराणि पवित्रयन्तः ।
श्रीमेदपाटपृथिवीमुकुटाभमज्जा-
पद्राभिधाननगरं समहं समीयुः ॥ १०१ ॥

अथ श्रीउदयनन्दिसूरिवर्णनम्–

आदाय संयमकृपाणमपारतेजः-
श्रीकङ्कलोहमयमुज्झितकोशशोभम् ।
आसि स्यदाददहितराशिरऽशेषसत्त्व-
वर्गे कृपालुहृदयैरिह यैरमायैः ॥ १०२ ॥

श्रीपूज्यपादपदवन्दनहेतवे ते
तत्रागमन्नुदयनन्द्यभिधा मुनीन्द्राः ।
श्रीलक्ष्मिसागरसुवाचकपुङ्गवाश्चा-
ऽन्येऽपि प्रधानविबुधा बहुसाधुसाध्व्यः ॥ १०३ ॥

इतश्च–

साईसजुःसमधरास्तिककारितेऽस्मि-

न्नुत्तुङ्गजैनभवने स्वधनेन पूर्वम् ।
तैर्गच्छपैर्व्यरचि तत्र महादिभद्र-
प्रासादसार्वपतिमूर्तिततिप्रतिष्ठा ॥ १०४ ॥

आत्माऽमितान्यपुरमेलितसङ्घसङ्घ-
वात्सल्यवस्त्रवरराजतटङ्कदानैः ।
प्राग्वाटशाठिकनराग्रिमकर्मनाम-
श्रद्धालुनाऽतिमहति प्रथिते महेऽस्मिन् ॥ १०५ ॥

तस्याग्रहाच्च वयजाह्वसुहृद्युतस्य
श्रीविक्रमाद्वसुखपुङ्खशशाङ्कवर्षे ।
श्रीलक्ष्मिसागरसुवाचकनायकानां
प्रादायि सूरिपदवी गणमोदकानाम् ॥ १०६ ॥

( त्रिभिर्विशेषकम् )

अथ श्रीसोमदेवसूरिवर्णनम्-

विद्याविवादमदमेदुरवादिवृन्दं
वाक्यैर्निवार्य नृपपर्षदि हर्षवर्षैः ।
यै रञ्जितः स्वककवित्वकलाऽतिरेका-
त्क्षुल्लैरपि क्षितिपतिः किल कुम्भकर्णः ॥ १०७ ॥

श्रीपावकावनिपसज्जयसिंहजीर्ण-
दुर्गेशमण्डलिकहामप्रमुखा नरेन्द्राः ।
आत्मीयगीर्मधुरताकवितासमस्या-
पूर्त्याऽऽदिना हृदि चमत्कृतिमापिता यैः ॥ १०८ ॥

भूजानिरञ्जनकलाबलबप्पभट्टि-
कल्पास्त्वनल्पधिषणा धिषणाऽनुकाराः ।
ये देवसूरिसदृशाः कुदृशां जयित्वा-

नैकस्तवस्तुतिविधानजिनप्रभाभाः ॥ १०९ ॥

तेभ्यो ददुर्नगरराणपुरे क्षणौघे
　सूरेः पदं धरणसङ्घपतिप्रणीते ।
श्रीसोमदेवगणिवाचकनायकानां
　श्रीरत्नशेखरवरा गणधारिणस्ते ॥ ११० ॥

( चतुर्भि कलापकम् )

अथ समक गुरुचतुष्कवर्णनम्—

द्वौ द्वौ रवी शशधराविति तेऽब्धिमानाः
　प्राप्ताः किमत्र समकं तमसश्छिदायै ? ।
धर्मादयः किमथवा विमला इमेऽर्था
　मूर्ताः स्वसेविषु सदा सुखपोषणार्थम् ? ॥ १११ ॥

श्रीरत्नशेखरगुरूदयनन्दिसूरि-
　श्रीलक्ष्मिसागरसुधीश्वरसोमदेवाः ।
नैकैः सकर्णपुरुषैरिति वर्ण्यमाना-
　निन्युः स्वगोभिरिह सार्ववृषं विवृद्धिम् ॥ ११२ ॥

( एव वसन्ततिलकाछन्दसा संलग्नकवित्वद्वात्रिंशिका )

श्रीमन्मालवमेदिनीन्दुवदनाऽलङ्कारहारप्रभो-
　रुग्रामागरवासिकर्मतनयश्रीरत्नसङ्घप्रभोः ।
आक्षेपाद्विधुवेदवर्ष्मवसुधावर्षे सुभिक्षोद्भवे
　लक्ष्मीसागरसूरिराजविलसद्भाग्यप्रकर्षस्तवे ॥११३॥

श्रीजम्बूसमसोमसुन्दरगुरोः श्रीसोमदेवाह्वयः
　शिष्यः सूरिवरश्च शिष्यवृषभश्चारित्रहंसोऽस्य यः ।
तस्य श्रीविबुधस्य शिष्यशिशुना काव्ये मुदा निर्मिते

सर्गोऽयं प्रथमोऽभवद्गुरुगुणाद्रत्नाकराख्याश्रिते ॥११४॥

( युग्मम् )

इति परमगुरुश्रीलक्ष्मीसागरसूरीश्वराणामुत्पत्तेरारभ्य भट्टारक-
पदप्राप्तिसमय यावत् श्रीगौतमादिगणधरपरम्परावर्णनगर्भो
गुरुगुणरत्नाकरनाम्नि काव्ये प्रथम सर्ग. ॥

अर्हम्

## अथ द्वितीयः सर्गः ।

वच्म्यथ लक्ष्मीसागरसूरीणां गच्छनाथताऽवसरम् ।
यत्पुनरिह विहितं तैः सुपुण्यकार्यं स्वयं तदपि ॥ १ ॥
आचार्या ये मालवादौ विहारं चक्राणाश्चार्हत्प्रतिष्ठादिकृत्यम् ।
ग्रामे ग्रामे निर्मितोरुक्षणं श्रीसङ्घं पुण्यं लम्भयन्तः शुभार्थम् ॥२॥
अश्वश्वेतज्योतिरक्षक्षमाऽब्दे पौषे मासे विक्रमाद् यावदासन् ।
ये सूरिश्रीरत्नयुक्शेखराणां पट्टे लक्ष्मीसागरा गच्छनाथाः ॥३॥
तावल्लाटापल्लिपुर्यां चतुर्धाश्रीसङ्घेनागत्य नानापुरेभ्यः ।
आनन्देनाऽऽनम्य यान् पूज्यपादान् सद्वात्सल्याद्युत्सवश्च व्यधायि॥

( युग्मम् )

वि-प्रद्युम्नोदारदेहप्रदीप्त्याऽपूर्वाऽखर्वाऽगर्वविद्याविनोदैः ।
वैराग्येण त्यक्तबाह्यार्थकोशैरङ्गीचक्रे स्थूलभद्रोपमा यैः ॥५॥
येभ्यो बिभ्रद्भ्यः सहस्राक्षभावं भास्वज्ज्योतीरुच्यशम्बाश्रितेभ्यः।
विश्वाबाधामुग् नमः सत्क्षमाभृच्चक्रं चक्रे स्वीयपक्षप्रवृद्ध्यै ॥६॥
येभ्यः केचित्साधवोऽवाप्तविद्या देदीप्यन्ते नव्यकाव्यप्रकाराः ।
तन्वानास्ते स्वोदयं सर्वदिक्षु प्रत्तक्षेमाः संमुखाः स्वध्वयाताम्॥७॥
त्रिंशच्चत्वारिंशदब्देभ्य आगाद् यः प्राग् येषामेकशो दृष्टिमार्गम् ।

देहीदानीमेष मङ्क्षूपलक्ष्यः स्यादीदृक्षा धारणा कस्य विश्वे?॥८
नैकेषु श्रीगच्छनाथेषु सत्सु प्राधान्यं येष्वेव जज्ञे महिम्ना ।
राज्ञीवोद्यत्प्रग्रहेषु ग्रहेषु श्रीमल्लक्ष्मीसागराः केन तुल्याः ?॥९॥

( सप्तविभक्तिक्रमं शालिनीछन्दसा काव्याष्टकम् )

यान् मालवस्थानवलोक्य गूर्जरक्ष्मायामवाप्तावसरेण साधवः ।
स्वसेवकाः केऽपि कृताः कलिक्षमाभृता ततोऽभूद्व्रण एष सव्रणः?

अथैतन्मेलकृति.-

वाग्देवतादत्तवरा व्रतीश्वरा-
दीग्गद्वपूरूपपराजितस्मराः ।
चकाशिरे ये कविमौलिमण्डनाऽ-
नुकारकाः श्रीगुरुरत्नमण्डनाः ॥ ११ ॥

श्रीसोमदेवाह्वयसूरिसूत्रिताऽ-
त्याक्षेपतः पक्षपृथक्त्वमोक्षिषु ।
निर्णिक्तहेमेव नतेषु तेषु च
श्रीस्तम्भतीर्थे नगरे गुरूत्सवैः ॥ १२ ॥

खदृक्शरोर्वीशरदि व्यधायि यै-
र्यदा गणैक्यं घनसङ्घसाक्षिकम् ।
तदाऽन्यपक्षीयमहात्मनामपि
प्रकाममासीन्मनसीह विस्मयः ॥ १३ ॥

( चतुर्भिः कलापकम् )

महाव्रतित्वं किल नैकशो नरा-
यत्पाणिनाऽथो विबुधत्वमापिताः ।
सुब्रह्मतां श्रीधरतां च यद्गिरा
कस्येदृगाऽऽस्ते गरिमा जगत्त्रये ? ॥१४॥

सितां सिताश्मप्रतिमां सुधां मुधा-
मधूलकां वा लपनश्रियं खलम् ।
तथेक्षुदण्डं तृणमेव मेनिरे
यद्वाचमास्वाद्य विदां वरा नराः ॥ १५ ॥

तपा इति ख्यातिमतां महात्मनां
कर्तुं हि युक्ता विकृतिर्न नित्यशः ।
तत्पञ्चपर्व्यां क्षपणादिकारकै-
र्यैस्त्याजिताऽऽज्यादिरियं जितेन्द्रियैः ॥ १६ ॥

श्वेताम्बरेति स्वकरूढिसूनृती-
कृते वितीर्णानि यतिव्रजाय यैः ।
श्वेताम्बराणि व्यवहारिणां नृणां
बोधाय तद्दानविधाविवाऽथवा ॥ १७ ॥

(उपजातिच्छन्दसाऽष्टकम्)

अथैषां गच्छपरिधापरिधानिकाविधि –

विक्रमात्पाणिपादाक्षक्षमावर्षे स्वहर्षतः ।
तपागच्छस्य यैर्वेषैरारब्धा परिधापना ॥ १८ ॥
यैराचार्या उपाध्यायाः स्थापिताः परिधापिताः ।
ये तेषामभिधां वक्ष्ये श्लेषाच्चात्रान्तिषत्क्रमाम् ॥ १९ ॥

अपि च–

श्रीरत्नमेघादिभिरिभ्यधुर्य्यै
यद्वारके प्रापि च यत्प्रसादात् ।
तत्राहमाऽऽख्याः कियतां यतीना-
माख्यामि ता याः श्रुतिमागता मे ॥ २० ॥

अथ च–

लक्ष्मीसागरसूरीशैः पूर्वं तैः परिधापिताः ।

तै[२१]स्त्वहक्संयतार्याः श्रीसुधानन्दनसूरयः ॥ २१ ॥
वि[१४]द्यामान[१८]धैराराध्याऽनगारार्यास्ततः पुनः ।
सूरयः शुभरत्नाख्याः शुभरत्ननिधिप्रभाः ॥ २२ ॥
महा[२५]व्रतपदव्यक्तव्रत्यार्याङ्गीकृतक्रमाः ।
श्रीमत्सोमजयाचार्या यशःसोमजयोद्यताः ॥ २३ ॥
ज्ञानामृ[१५]तैरुचिस्फीतसंवरश्रमणाऽग्रिमाः ।
आचार्या जिनसोमाख्याः सोमजार्जुनकीर्तयः ॥२४॥
गुणरा[३६]मैतपोधाममुनिसत्याप्तसेवनाः ।
वृजिनध्वान्तहंसाः श्रीजिनहंसाह्वसूरयः ॥ २५ ॥
विश्वभू[५३]तैहिताचारचारित्र्यार्याश्रितास्ततः ।
सूरयः सुन्दरा मत्या श्रीमत्सुमतिसुन्दराः ॥ २६ ॥
भयेन्द्रि[५७]यैजयेद्धश्रीश्रमणार्याऽनुरागिणः ।
स्वशिष्याग्र्याश्च सूरीशाः श्रीमत्सुमतिसाधवः ॥ २७ ॥
भा[१२]स्वत्तारतपःपूतशरीरव्रातिशालिनः ।
धन्यराजप्रियप्रज्ञाः श्रीराजप्रियसूरयः ॥ २८ ॥
अ[११]हीनेन्दुशुचिश्लोकधारिचारित्रिसाधवः ।
अनूचाना नतानेकनरेन्द्रा इन्द्रनन्दयः ॥ २९ ॥

अथ वाचकाः—

सदान[२१]न्दकराऽमन्युमुन्यार्या जुष्टमूर्तयः ।
श्रीमन्महीसमुद्राह्वा महोपाध्यायपुङ्गवाः ॥ ३० ॥
क्ष[३१]मारामयमारामघनसंयमिसंश्रिताः ।
श्रीमल्लब्धिसमुद्राख्या उपाध्याया महोमयाः ॥ ३१ ॥
तै[२७]स्त्वहष्टिगरिष्ठाङ्गव्रत्यार्यासादिताश्रयाः ।
उपाध्यायाः प्रशस्याऽऽयाः श्रीमन्तोऽमरनन्दयः ॥ ३२ ॥

कुविद्याऽवद्यभित्साधुसत्याराधितविग्रहाः ।
कुशाग्रीयधियः श्रीमज्जिनमाणिक्यवाचकाः ॥ ३३ ॥
ज[१२]गतीजनताऽऽदेयवचोवाचंयमाश्रमाः ।
वाचका धर्महंसाख्या धर्महंससरःसमाः ॥ ३४ ॥
मण्डिताश्चरणच्छा[१३]याभृदमायमहात्मभिः ।
उपाध्यायपदोपेताः श्रीमदागममण्डनाः ॥ ३५ ॥
यतिध[१०]र्मकृतिप्राप्तगौरवव्रतिभूषिताः ।
इन्द्रहंसा उपाध्याया इन्द्रहंससमौजसः ॥ ३६ ॥
अ[११]ङ्गजन्माऽऽग्रकाङ्क्षिस्तुमुमुक्षुक्षेमसौख्यदाः ।
वाचका गुणसोमाख्या मुख्या मेधाविवाग्मिनाम् ॥ ३७ ॥
तथाऽमा[१२]सेपराहार्ययत्यार्या वरवाचकाः ।
श्रीमन्तोऽनन्तहंसाह्वाः सुबह्वागमवेदिनः ॥ ३८ ॥
भुव[१४]नाद्भुतकृत्साधुधुर्याः श्रीसङ्घसाधवः ।
वाचका वाक्यचातुर्याऽऽवर्जिताऽऽर्यसभासदः ॥ ३९ ॥
यद् न्यगादि मया मानमेषामन्तिषदामिह ।
अनुमानेन तद् न्यूनाऽधिकत्वे नैव दूषणम् ॥ ४० ॥

अथ कति विबुधाभिधा –

यैरथार्पितवेषाणामशेषाणां महात्मनाम् ।
संख्यां ख्यातुमलं नाहं तादृग्ज्ञप्तेरयोगतः ॥ ४१ ॥
गीतार्थानां तथाऽप्यत्र ब्रुवे नामानि कानिचित् ।
कौतुकादेतदाख्याऽन्तस्थाऽष्टवर्गाक्षरक्रमात् ॥ ४२ ॥
राजतिलकशुभतिलकाऽभयतिलका अमरभुवनशिवतिलकाः ।
श्रीसिद्धान्तविवेका भुवनविवेकाऽभिधा विबुधाः ॥४३॥
एतेऽक्रान्ता मता भूरिभूतेष्टा अष्टविष्टपे ।

सर्वमङ्गलयाऽऽश्लिष्टाः श्रीमहाव्रतिमूर्तिवत् ॥ ४४ ॥
( युग्मम् )

जयरुचिसिद्धान्तरुची अथ प्रभाराजमेरुराजवराः ।
जयराजचन्द्रराजाऽमरराजानन्दराजाख्याः ॥ ४५ ॥
सुन्दरराजो नन्द्यादिमसहजानन्दसहजनामानौ ।
शिववदमी एकादश विबुधाः स्मरहा अपि च-जान्ताः ॥४६॥
( युग्मम् )

श्रीसुधाभूषणा लब्धिभूषणाऽभयभूषणौ ।
देवभूषणनामानस्तथा कमलभूषणः ॥ ४७ ॥
बुधाः प्रतिष्ठाकल्याणाऽभयकल्याणसंज्ञकाः ।
जयकल्याण एतेऽष्टौ णान्ता दिग्गजतेजसः ॥ ४८ ॥
( युग्मम् )

सत्सुविहिताभयश्रुतसंज्ञौ सुमतिश्रुतेन्द्रशीती च ।
मुनिकीर्तिनेमिकीर्ती सुलब्धिकीर्तिस्तिलककीर्तिः ॥४९॥
सिद्धान्तादागमात्कीर्ती तथा विनयमूर्तयः ।
धीरमूर्तिवरानन्दमूर्तिसंयममूर्तयः ॥ ५० ॥
सत्तिलकमूर्तिलब्ध्यादिममूर्ती षोडशेति विबुधाः स्युः ।
इन्दुकला इव विमला एतेऽतान्तास्तथाऽर्त्यन्ताः ॥ ५१ ॥
( त्रिभिर्विशेषकम् )

ज्ञानप्रमोदचरणप्रमोदसंज्ञौ जिनप्रमोदश्च ।
भावानन्दः पुण्यानन्दः श्रीरत्ननन्दिवराः ॥ ५२ ॥
श्रुतनन्दिरभयनन्दिप्रभुसंयमनन्दिराजनन्द्याभिधाः ।
दश दिक्पतय इवैते दान्ताः सुमनःश्रिता विबुधाः ॥५३॥
( युग्मम् )

जयसाधुचरणसाधू बुधाश्च सिद्धान्तसाधुगुणसाधू ।

सत्कमलसाधुरेते ध्वन्ताः स्वस्तरव इव पञ्च ॥ ५४ ॥
श्रीसत्यरत्ना वरमेरुरत्नाः सचन्द्ररत्ना अथ नेमिरत्नाः ।
लब्ध्यादिरत्नास्तदनु प्रतिष्ठारत्नाः सुधारत्नसुसूररत्नाः॥५५॥
सत्तिलकरत्नलक्ष्मीरत्नसमयरत्नचरणरत्नाख्याः ।
सुमतिरत्नेन्द्ररत्नौ कुलरत्नः कमलरत्नश्च ॥ ५६ ॥
सरसोमसोममण्डनशिवमण्डनसमयमण्डनाह्वानाः ।
लक्ष्मीमण्डनभावादिममण्डनकमलमण्डनकाः ॥ ५७ ॥
श्रीपुण्यनन्दना हेमनन्दना धर्मनन्दनाः ।
प्रभाऽभयागमेभ्यश्च वर्धनाः शुभवर्धनाः ॥ ५८ ॥
इन्द्रज्ञानः स्फुरज्ज्ञानः सहजज्ञानसंज्ञकः ।
सद्बज्ञानाभिधः साधुस्तथा कल्याणदर्शनः ॥ ५९ ॥
पण्डिताः पर-मा-नान्ताः एते मर्त्येशसत्कृताः ।
देवा इव त्रयस्त्रिंशत्सुधर्माचारदर्शिनः ॥ ६० ॥

( षड्भि कुलकम् )

उदयप्रभनामानः पण्डिताः सुन्दरप्रभाः ॥
आगमप्रभसद्भावलाभेन्द्राऽजितलाभकाः ॥ ६१ ॥
एतेऽदर्पक-ला-भान्ताः षड्दर्शनसुरा इव ।
पुण्योपदेशतः क्लृप्तस्वाप्तदर्शनदीप्तयः ॥ ६२ ॥

( युग्मम् )

श्रीविमलधर्मसारादिमधर्मौ चन्द्रधर्मजयधर्मौ ।
सिद्धान्तधर्मसुतिलकधर्मभुवनधर्मनामानः ॥ ६३ ॥
चारित्रधर्मसदऽमरधर्माऽजितधर्मकमलधर्माख्याः ।
गुणधर्मकनकधर्मौ सुमतेः संवेगतो नेमी ॥ ६४ ॥
श्रीसर्वसोमा वरशान्तिसोमाः श्रीशीलसोमा उदयादिसोमाः ।

सिद्धान्तसोमा विजयादिसोमाः सद्धर्मसोमास्तिलकादिसोमाः ६५
शुभसोमराजसोमाऽभयसोमा भुवनसोमकुलसोमौ ।
लाभसोमेन्द्रसोमौ सत्यागमसंयमौ यमिनौ ॥ ६६ ॥
शिवहेमसारहेमौ जिनजयहेमौ च भद्रहेमाख्यः ।
संवेगरत्नहेमौ शान्तिक्षेमा जयक्षेमाः ॥ ६७ ॥
विश्वदेवा इवामीषु तेजःपात्रं त्रयोदश ।
बुधाः शेषा भवन्त्वेवं[२८] समेऽमान्ताः क्षमाब्धयः ॥ ६८ ॥

( षड्भि कुलकम् )

श्रीविनयप्रियसारप्रियागमप्रियजिनोदयाः सदयाः ।
हर्षोदयरत्नोदयभुवनोदयनामधेयाश्च ॥ ६९ ॥
साधुमाणिक्यविबुधाः श्रुतमाणिक्याश्च सूरमाणिक्यः ।
समयमाणिक्यसंज्ञाः सज्ञानानन्दमाणिक्यौ ॥ ७० ॥
सुमतिमाणिक्यनामा सुराजमाणिक्यसर्वमाणिक्यौ ।
सत्सुमतिसत्यसुन्दरसत्यौ कल्याणसत्यश्च ॥ ७१ ॥
रत्नजयास्तीर्थजयाः सिद्धान्तजयाश्च तिलकजययतयः ।
अजिताभयकनकजयः कुलोदयेन्द्रोदयौ सनयौ ॥७२॥
साधुविजयः शिवविजयाः सजयाश्चारित्रविजयजिनविजयाः ।
रत्नविजयसर्वविजयविवेकविजयेन्द्रविजयाश्च ॥ ७३ ॥
महोमया इमेऽयान्ताः पण्डिता अहितच्छिदे ।
षट्त्रिंशद्दण्डशस्त्राभा गणनायकचक्रिणः ॥ ७४ ॥

( षड्भिः कुलकम् )

धर्मसुन्दरचारित्रसुन्दरास्तीर्थसुन्दराः ।
विजय्रात् सुन्दरा विज्ञधराः समयसुन्दराः ॥ ७५ ॥
सिद्धान्तसुन्दराश्चापि चरणोदयसुन्दरौ ।

दक्षाः सुमतिसाराख्याः सोमसारेन्द्रसारकौ ॥ ७६ ॥
सज्ज्ञानधीरसंज्ञा विज्ञाश्चारित्रधीरशिवधीराः ।
हेमादिमधीराऽभयधीरसुमतिधीरकुलधीराः ॥ ७७ ॥
आनन्दधीरविबुधाः शुभवीराश्चन्द्रवीरशिववीराः ।
जयवीरश्रुतवीराजितवीरास्तदनु कुलवीराः ॥ ७८ ॥
आनन्दाच्चारित्रा आगमचारित्रपण्डितप्रवराः ।
सहजचारित्रनामा चरणाच्चन्द्रः सहजचन्द्रः ॥ ७९ ॥
श्रीसोमभद्रसारादिमभद्रज्ञानभद्रनामानः ।
श्रीसिद्धान्तसमुद्राः समयसमुद्राभिधानाश्च ॥ ८० ॥
सन्नेमिशेखरा राजशेखराभयशेखरौ ।
सुमतेः शेखरः साधुस्तथा भुवनशेखरः ॥ ८१ ॥
भुवनात्सागराऽऽरावः श्रीमच्चरणसागराः ।
नयाभयागमेभ्यश्च सागराः सोमसागराः ॥ ८२ ॥
रत्नसूरा वचःसूरा जिनसूरा जितस्मराः ।
सर्वसूराः शुभात्सूराश्चन्द्रसूराश्च पण्डिताः ॥ ८३ ॥
द्विपश्चाशदमी एवं सदा-रान्ता जगन्नताः ।
श्रीगणाधीशशुश्रूषापरा वीरसुरा इव ॥ ८४ ॥

( दशभि' कुलकम् )

श्रीसोममङ्गला हेममङ्गला धर्ममङ्गलाः ।
शुभशीलाः सुसंवेगशीलाश्च ज्ञानशीलकाः ॥ ८५ ॥
चारित्रशीला वरसूरशीलाः सौभाग्यशीला इह नन्दिशीलाः ।
सद्भावशीला अथ शीलशब्दः पुरो जिनेन्द्रागमसुन्दरेभ्यः ॥८६
तीर्थकुशलजिनविमलौ शुभविमलः पटुवचाश्च कुलकमलः ।
अभयाच्छुभतः कीर्तेर्विशालशब्दस्तथा विबुधाः ॥८७॥

तिथिवत्प्रातिपन्मुख्या एषु पञ्चदशाऽपरे ।
सप्तर्षिवदपङ्काङ्गा लान्ता द्वाविंशतिः समे ॥ ८८ ॥
( चतुर्भि. कलापकम् )

आनन्ददेवा अथ तीर्थदेवा धनादिदेवाः कनकादिदेवाः ।
श्रीचन्द्रदेवाऽमरदेवलक्ष्मीशिवाश्च संवेगशिवाः शिवाङ्गाः॥८९॥
श्रीमच्चन्द्रयशःकुलयशःकमलकलशकनककलशाख्याः ।
विबुधा इमे वशान्ता रवय इव द्वादशोदयिनः ॥ ९० ॥
( युग्मम् )

श्रीउदयहर्षलक्ष्मीहर्षविजयहर्षहंसहर्षाख्याः ।
शिवहर्षशीलहर्षाः सुनेमिहर्षाश्च कृतहर्षाः ॥ ९१ ॥
सज्ज्ञानहर्षनामानस्तथा कनकहर्षकः ।
क्षमोद्भवा अमी-षान्ता विबुधा निधिवन्नव ॥ ९२ ॥
( युग्मम् )

श्रीमत्संयमहंसाः सुरत्नहंसा विवेकहंसाश्च ।
सल्लब्धिहंसलक्ष्मीहंसाः सिद्धान्तहंसवराः ॥ ९३ ॥
अथ शीलहंसनन्द्यादिमहंसौ शान्तिचरणहंसौ वा ।
श्रुतहंसाभयहंसौ सुन्दरहंसश्च कुलहंसः ॥ ९४ ॥
जडध्याश्रयनिर्मुक्ता रत्नानीव चतुर्दश ।
सदाऽसान्ता बुधा एते सुमनःसुखदायिनः ॥ ९५ ॥
( त्रिभिर्विशेषकम् )

विबुधा आगमतीर्थास्तथा कमलधीरकनकसौभाग्यौ ।
लावण्यादी भूषणभद्रौ चारित्रमाणिक्यः ॥ ९६ ॥
द्व्यादिद्वादशपर्यन्तयत्यार्यासंयुतान् बुधान् ।
ये पर्यधापयन्नेवं शर्वोनत्रिशतीमितान् ॥ ९७ ॥

येषां सुधामुचं वाचं श्रुत्वैते सपरिच्छदाः ।
रत्नाद्यैरास्तिकैः कैश्चित् प्रायेण परिधापिताः ॥ ९८ ॥

श्रीश्रामण्यं सहस्राणुमिततनुमतां विज्ञवाचंयमाना–
माचार्यत्वं नवानां तदनु तिथिमितिव्यापिनां वाचकत्वम् ।
एकार्यायाश्च माहत्तरपदमपि यैरर्पितं पण्डितानां
गण्यादीनां पदानां नहि परिगणना स्यात् स्वयं स्थापितानाम् ९९

अभिकृतिशतमानागमगुणनपराः प्रत्यहं प्रमादहराः ।
बभुरिह लक्ष्मीसागरसूरीशास्ते युगप्रवराः ॥ १०० ॥

श्रीमन्मालवमेदिनीन्दुवदनालङ्कारहारप्रभो–
रुग्रामागरवासिकर्मतनयश्रीरत्नसङ्घप्रभोः ।
आक्षेपाद्विधुवेदवर्ष्मवसुधावर्षे सुभिक्षोद्भवे
लक्ष्मीसागरसूरिराजविलसद्भाग्यप्रकर्षस्तवे ॥ १०१ ॥

श्रीजम्बूसमसोमसुन्दरगुरोः श्रीसोमदेवाह्वयः
शिष्यः सूरिवरश्च शिष्यवृषभश्चारित्रहंसोऽस्य यः ।
तस्य श्रीविबुधस्य शिष्यशिशुना काव्ये मुदा निर्मिते
सर्गोऽत्र प्रथमेतरो गुरुगुणाद्रत्नाकराख्यायुते ॥१०२॥

इति परमगुरुलक्ष्मीसागरसूरीणां गच्छनायकपदवीप्राप्तिगच्छ-
मेलगच्छपरिधापनिकादिविधानगर्भो गुरुगुणरत्नाकरनाम्नि
काव्ये द्वितीय. सर्ग. ।



अर्हम्

# अथ तृतीयः सर्गः ।

श्रीगूर्जरत्राऽमरमालवेषु यै-
राधायि या श्राद्धकृतोद्भवोच्चयैः ।
बिम्बप्रतिष्ठादिककार्य्यमालिकां
वच्मि क्रमात्तामथ चित्रकारिकाम् ॥ १ ॥

भट्टारकाः केऽपि पदादिकं यदाऽऽ-
देशादकार्षुर्वृषकृत्यमुत्सवैः ।
यात्रा च केचिच्च महर्धिकाऽऽस्तिका-
यद्वारके यत्तदपि ब्रुवे कियत् ॥ २ ॥

( युग्मम् )

अत्र प्रथममुकेशज्ञातीयसाह०साह्वविहितविस्तर. प्रोच्यते—

प्रासादसौधर्द्धिविधूतताविष-
च्छायाभरे श्रीगिरिपूर्वके पुरे ।
श्रीसोमदासावनिजानिमन्त्रिणा
धर्मिष्ठधुर्येण च साह्वसाधुना ॥ ३ ॥

[११]खांक्षिक्षमामानमणोरुपित्तला
निर्मापिता या जिनमूर्तिरुज्ज्वला ।
तस्याः परस्या अपि बिम्बसन्तते-
श्चक्रे प्रतिष्ठा प्रथमं महेन यैः ॥ ४ ॥

( युग्मम् )

अथ दक्षणीयसाहमहादेवविस्तरः—

श्रीदेवगिर्याह्वमहापुरादिहाऽऽ-
गत्याऽतिभक्त्या प्रणिपत्य तीर्थपान् ।

शत्रुञ्जयादौ सुगुरून् पुनर्महा-
देवाऽभिधेनेभ्यवरेण साधुना ॥ ५ ॥
लाटादिपल्ल्यां प्रथिते पृथुक्षणे
प्रभूतपुंसां पटटङ्ककाऽर्पणे ।
श्रीसोमदेवाह्वयसूरिशोभितैः
पूज्यैस्ततो यैः शतशो यतैर्वृतैः ॥ ६ ॥
श्रीमत्सुधानन्दनहेमहंसयोः
सद्वाचनाऽऽचार्यशिरोऽवतंसयोः ।
प्रसादिता वाचकता तदोदया-
च्चूलागणिन्याश्च महत्तरापदम् ॥ ७ ॥

( त्रिभिर्विशेषकम् )

अथ मण्डपीयस०चादारचितविस्तर –

हाडावटीमालवदेशनायक-
प्रजाप्रियाऽहम्मुदमुख्यमन्त्रिणा ।
श्रीमण्डपक्ष्माधरभूमिवासिना
सङ्घाधिनाथेन च चन्द्रसाधुना ॥ ८ ॥
द्वासप्ततिर्दारुमया जिनालया-
रीरीचतुर्विंशतिपट्टराजिताः ।
ये कारिता मङ्गलदीपकादिषट्-
त्रिंशत्प्रमाणोपकृतिश्रियाऽऽश्रिताः ॥ ९ ॥
प्राग्वाटवंशोदधिपार्वणेन्दुना-
ऽमुना चतुर्लक्षचतुष्कलव्ययात् ।
पुण्यैकचित्ताऽप्रमिताऽऽस्तिकास्तिकी-
पङ्क्तेर्दुकूलाभरणादिदानतः ॥ १० ॥

क्लृप्ते गरीयस्तरविस्तरे तत-
स्तेषां प्रतिष्ठा यतिपैरकारि यैः ।
श्रीमत्सुधानन्दननामवाचक-
प्रभोरनूचानपदं च तत्क्षणे ॥ ११ ॥
( चतुर्भिः कलापकम् )

अथ मन्त्रिगदाकृतप्रथमविस्तर –

अहम्मदावादपुराधिवासिना
सोङ्गींत्रिके श्रीगदराजमन्त्रिणा ।
त्रिंशत्सहस्रद्रमटङ्कविक्रयाद्
यत् कारितं नूतनजैनमन्दिरम् ॥ १२ ॥
श्रीसोमदेवाह्वयसूरिभिस्तत-
स्तत्राऽऽर्हती मूर्तिततिः प्रतिष्ठिता ।
ददे यदादेशमथाप्य सोत्सवं
श्रीवाचकत्वं शुभरत्नसाधवे ॥ १३ ॥
आशादिपल्लीपुरि मञ्जुले महे
महेभ्यराड्मण्डनमङ्कमण्डिते ।
प्रवर्तिनीनाम्नि पदे पुनस्तदा
तैः सोमलब्धिर्गणिनी निवेशिता ॥ १४ ॥
( त्रिभिर्विशेषकम् )

अथ मालवीयसं०सूरावीराविरचितविस्तरः-

श्रीग्यासदीनावनिशुग्नियोगिनौ
महर्द्धिकौ मण्डपदुर्गवासिनौ ।
श्रीसूरवीरौ कृतिनौ सुदानिनौ
प्राग्वाटमुख्याविह यौ यशस्विनौ ॥ १५ ॥

यैर्गच्छराजैर्घनसङ्घसंयुतौ
साकं सुधानन्दनसूरिभिश्च तौ ।
सिद्धाचलादौ जिनपूजनोद्यतौ
ग्रामं क्रमादुम्बरहट्टमागतौ ॥ १६ ॥
पर्यङ्किकातूर्यगुरूदरस्फुर-
त्तुरङ्गयुग्यव्रजजातडम्बरम् ।
किं पार्थिवः कोऽपि महानिहागमद् ?
यत्सङ्घमीक्ष्येति जनस्तदाऽवदत् ॥ १७ ॥
ताभ्यां महेभ्याद्भुतकारिणि क्षणे
तत्राऽप्रमाणैर्द्रविणैर्विनिर्मिते ।
यैरर्पिता श्रीशुभरत्नवाचक-
स्याऽऽचार्यसम्पत् प्रमदप्रदायिनी ॥ १८ ॥
श्रीपातशाहेः फरमाणमाप्य तौ
श्रीतीर्थयात्रामथ च प्रचक्रतुः ।
लक्षाधिकार्थव्ययतः सविस्तरं
निरन्तरायं यदुरुप्रसादतः ॥ १९ ॥
( पञ्चभिः कुलकम् )

अथ दाक्षिणात्यस० धनराजनगराजजनितक्षण.—
श्रीदेवगिर्याः समुपेत्य गूर्जर-
क्षोण्यामगण्याढ्यनृणां शिरोमणिः ।
श्रीधन्यराजो नगराजबन्धुयुग्
यान् नंनमीति स्म यतीश्वरान् मुदा ॥ २० ॥
श्रीमन्महिम्मूदमहीपतेर्महो-
पदाप्रदानाद् बहुमानमासदत् ।

ततः सहर्षं चक्रवांश्चतुर्ष्वसौ
तीर्थेषु यात्रां विमलाऽचलादिषु ॥२१॥
श्रीपत्तनेऽस्मिन्नणहिल्लपाटके
प्राघृट्चतुर्मासकमेष तस्थिवान् ।
अबूभुजद् भानुमितार्धसंयुत-
ज्ञातीनभीष्टैरशनादिभिस्तथा ॥२२॥
कौशेयवासःकनकादिनाणकै-
स्ताम्बूलदानाद् बहुशः सुदृग्विशाम् ।
निर्माय निर्मानमहं दृढाऽऽग्रहं
येषां पुरस्ताद् धनराजसङ्घराट् ॥ २३ ॥
सूरेः पदं सोमजयाह्ववाचक-
स्याऽकारयद् यत्करपङ्कजेन यः ।
यदन्तिषच्छ्रीजिनसोमपण्डित-
प्रभोरुपाध्यायपदं च पत्तने ॥ २४ ॥
श्रीधन्यराजो नगराजसङ्गतः
स दक्षिणीयोऽपि कृतार्थिकामितः ।
लक्षाधिकैस्तत्र सुवर्णटङ्ककै-
र्वृष्टस्तदाऽहो ! घनकान्तिरुच्चकैः ॥ २५ ॥
( षड्भि. कुलकम् )

अथ स०गदाकस्य द्वितीय प्रथीय क्षण –

श्रीगूर्जरज्ञातिवणिग्वराग्रणी-
मन्त्री सुरत्राणसुखक्षमाभृताम् ।
विज्ञो वदान्यो विनयी नयी बृह-
त्पुण्यप्रथा जैनमतप्रभावकः ॥ २६ ॥

निर्व्याजवृत्त्या बहुवत्सरावधि
श्रीपक्षिकां प्रत्युपवासकृच्च यः ।
तत्पारणे द्वित्रिशताऽऽस्तिकावले-
र्वात्सल्यकारी गदराजसङ्घराट् ॥ २७ ॥

व्योमेक्षणक्ष्मामणरीतिपिण्डितं
बिम्बं स नाभेयविभोरबीभरत् ।
तत् प्रापयत् चार्बुदभूध्रभूषणे
भैमे विहारे बहुवित्तविक्रयात् ॥ २८ ॥

आसाद्य सद्यः फरमाणमुर्वरा-
राजस्य यात्राकरणार्थमुत्सुकः ।
परःसहस्रैर्नृभिरर्वभिः परः-
शतैः स्वनःसप्तशतैश्च शोभितम् ॥ २९ ॥

विचित्रवाद्यारवगर्जदम्बरं
श्रीसङ्घमादाय सुखप्रयाणकैः ।
श्रीभानुलक्षादिमहीशसत्कृतः
प्राप क्रमादर्बुदपर्वतं स तम् ॥ ३० ॥

रैटङ्कलक्षव्ययतोऽनणीयसः
सङ्घस्य मिष्टान्नपटादिदायिना ।
तस्योपरिष्टाद् धनिविस्मयावहे
-महे महेभ्येन तु तेन मण्डिते ॥ ३१ ॥

तत्रेत्य यैः सोमजयाख्यसूरिभिः
सत्रेषु नेत्रेन्द्रियचन्द्रहायने ।
सा मूर्तिरर्चा अपराश्च भूरिशः
प्रतिष्ठिता भौमजिनौकसि स्थिताः ॥ ३२ ॥

ततः सुधानन्दनसंज्ञसूरिभि-
दंत्ताऽनुमत्या च गदाऽऽग्रहात् तदा ।
प्रसादिता श्रीजिनसोमवाचक-
स्याऽऽचार्यता यैर्गणपैः स्वपाणिना ॥३३॥

अथात्रैव सा०डुङ्गर-स०सांडाकृतमह –

श्रीपत्तनादेत्य बृहद्वृषावली-
विधायिसाधारणसाधुसूनुना ।
श्रीडुङ्गरेण प्रथिते क्षणेऽर्पितं
यैर्वाचकत्वं जिनहंससद्गुरोः ॥ ३४ ॥

संडाऽऽस्तिकेनार्बुदवासिना पुनः
प्रौढे प्रणीतेऽत्र धनैर्घनैर्महे ।
प्रादाय्युपाध्यायपदं सुपण्डिते-
शितुः सुमत्यादिमसुन्दरस्य यैः ॥ ३५ ॥

स्वं मन्यमाना गदराजडूङ्गर-
श्रीसंडकेभ्याः सफलं जनुस्ततः ।
श्रीजीरपल्लिप्रभुपार्श्वतीर्थकृ-
द्यात्रामकार्षुः कुशलेन सोत्सवम् ॥ ३६ ॥

( एकादशभि कुलकम् )

अथाहम्मदावादीयहर्म्यद्वारिकप्राग्वाटसं०कर्मण-दो०महि-
राज-दो०हेमादिविस्तर.–

श्रीतीर्थयात्राद्युरुपुण्यकारिणा
श्रीकर्मणाऽऽख्येन महीपमन्त्रिणा ।
महीसमुद्राभिधपण्डितप्रभोः
प्रादाय्युपाध्यायपदं विवेकिना ॥ ३७ ॥

शत्रुञ्जये यो दशभिर्जिनालयै-<br>
र्यात्राविधायी गुणराजसङ्घराट् ।<br>
पौत्र्या कर्पूर्याह्वयया तदीयया<br>
तत् कारितं लब्धिसमुद्रसद्यतेः ॥ ३८ ॥

निर्दम्भमर्हद्गुरुभक्तिभावितः<br>
साध्वन्वये यः प्रचुराऽऽज्यदः सदा ।<br>
तेनैतदेवामरनन्दिपण्डित-<br>
स्याऽकारि धीमन्महिराजसाधुना ॥ ३९ ॥

श्रीपुण्डरीके कृतवान् नवोत्सवै-<br>
र्यात्रा द्विशोऽब्दं प्रति सङ्घयुग् यकः ।<br>
जिनादिमाणिक्यगणिप्रभोरदः<br>
सहेमधन्यादिपतिर्व्यधापयत् ॥ ४० ॥

चतुर्भिरेभिः प्रथिते पृथक् पृथक्<br>
पृथूत्सवे वेषपुरे नरेश्वरैः ।<br>
न्यायार्जिताऽन्यूनधनैरहम्मदा-<br>
वादादुपेत्य त्वभिनुत्य यान् प्रभून् ॥ ४१ ॥

एषां चतुर्णां व्रतिनां तपःक्षमा-<br>
चातुर्यविद्यादिगुणाश्चितात्मनाम् ।<br>
तदाग्रहात् सोमजयाह्वसूरिभिः<br>
साकं यकैर्वाचकता समर्पिता ॥ ४२ ॥

( षड्भि कुलकम् )

अथ सं०खीमा–स०कुन्ता–कृतविस्तरः–

सौवश्रिया स्वर्गपुरीं जिगाय या<br>
जिनालयव्याजवशात् ततः स्वकान् ।

सौवर्णकुम्भध्वजराजिराजितान्
यस्या विमानानुपदीचकार सा ॥ ४३ ॥

सीरोहिकायां पुरि तत्र चित्रकृ-
द्धर्मिष्ठधन्याऽऽस्तिकधोरणीधृति ।
दीनाऽऽदिदेहिप्रकरोपकारकः
खीमाऽभिधः सङ्घपतिः समस्ति यः ॥४४॥

निष्पादिते तेन महे महात्मनां
वात्सल्यवर्याम्बरदानपूर्वकम् ।
यैर्गच्छराजैर्जिनहंसवाचकं
प्रति स्वयं सूरिपदं प्रसादितम् ॥ ४५ ॥

सुंडाककाभिख्यपुरादुदारधीः
कुन्ताऽभिधः सङ्घविभुः श्रियाऽर्हताम् ।
यात्रादिपुण्यैकपटुर्ह्युपाययौ
योऽत्र स्वपुत्र्याः सुविवाहहेतवे ॥४६॥

द्वात्रिंशताऽसौ सह रिक्किकाशतै-
स्ताम्बूलनिर्माणपुरस्सरं सताम् ।
येषां पुरस्तादतिमात्रमाग्रहं
विरच्य रुच्यं च महं महीयसम् ॥ ४७ ॥

श्रीसोमदेवव्रतिनेतुरन्तिष-
न्मुख्यस्य मत्याऽनुकृतद्युसद्गुरोः ।
श्रीमत्सुमत्यादिमसुन्दरस्य यै-
राचार्यतामर्पयति स्म विस्मितः ॥ ४८ ॥

( षड्भिः कुलकम् )

अथाऽकमीयसो० ईश्वरपताप्रथितविस्तर —

ख्यातः सना तीर्थजिनेन्द्रवन्दना-
दानाद्यगण्याऽनणुपुण्यकर्मभिः ।
य ईश्वरः श्राद्धवरः पताऽभिध-
भ्रातृश्रितो भूरिधनैरकारयत् ॥ ४९ ॥

प्रासादमुच्चैरिलदुर्गपर्वतो-
परिप्रसादादिह भानुभूपतेः ।
प्रतिष्ठितं तद्विहितेऽद्भुते महे-
ऽजितेशबिम्बं बहुबिम्बयुक् च यैः ॥ ५० ॥

अथ को० श्रीपालकलितमह —

यः प्रौढिमान् भानुनरेशधीसखः
श्रीपालसाधुः सुकृतार्जनोन्मुखः ।
ऊकेशवंशेन्दुरियद्दरस्थित-
स्तपागणे वेषसमर्पणे रतः ॥ ५१ ॥

स्वीयश्रिया [illegible] विधाय सूद्भवं
यत्पाणिना सूरिपदं प्रदापितम् ।
श्रीमत्सुमत्यादिमसाधुपण्डिते-
शितुः सुधीसाधुगुणोच्चयाम्बुधेः ॥ ५२ ॥

(युग्मम्)

अथोकेशज्ञातीयसो० पतासो० हरिश्चन्द्ररचितक्षण —

पदप्रतिष्ठादिविधायकः स्वयाऽऽ-
ढ्या श्रिया चाऽकमियोऽजनीश्वरः ।
भ्राता लघुस्तस्य पताह्वयस्तु यः
सुतो हरिश्चन्द्र इतीह विश्रुतः ॥ ५३ ॥

ताभ्यां कृतिभ्यां महति क्षणे कृते
दत्त्वाऽऽशु ये वाचकतां पृथग्महम् ।
राजप्रियायाऽदुरथेन्द्रनन्दये
द्वाभ्यां सुधीभ्यामिति सूरिसम्पदम् ॥ ५४ ॥
( युग्मम् )

अथ मं०मेघमहः-

श्रीधर्महंसस्य बुधस्य वाचक-
श्रीरिन्द्रहंसस्य च यैः समर्पिता ।
अत्याऽऽग्रहाद् रम्यमहादहम्मदा-
वादीयमर्त्याग्रिममेघमन्त्रिणः ॥ ५५ ॥

अथ ऊ०सा०जीवाविहितविस्तर -

महादनाद् येऽत्र पुरे निवासकृद्
यः खीमसूनुर्वितनोति सन्ततम् ।
श्रीतीर्थयात्रादिवृषान् सुखेच्छया
जीवाह्वयः साधुरनर्गलश्रिया ॥ ५६ ॥
निशम्य सम्यग् यदुदारदेशनां
तेनानगारावलिवेषदायिना ।
क्लृप्ते महे वाचकता मुदा ददे
श्रीपण्डितायाऽऽगममण्डनाय यैः ॥ ५७ ॥
( युग्मम् )

अथ को०सायररचितविस्तरः-

मन्त्रीशिता भानुनृपस्य सुक्रिय-
व्रतिप्रियप्राज्यकुटुम्बबन्धुरः ।
यः सायरस्तेन कृते महेऽर्पितं
यैर्वाचकत्वं गुणसोमसद्गणेः ॥ ५८ ॥

अथ स०धनाजनितक्षण –

प्रत्यब्दयात्राकरहेमसूनुना
धनाभिधेनेभ्यवरेण साधुना ।
अनन्तहंसस्य मनीषिशेखर-
स्याऽदापि यैर्वाचकता सविस्तरम् ॥ ५९ ॥

अथाऽऽशापल्लीयप०जूठामउठाकृतविस्तर.–

समग्रगीतार्थसुवेषदायका-
जूठादयो ये पटुहंसनन्दनाः ।
तैर्विस्तरे चारुतरे कृते ददे
यैर्वाचकत्वं बुधसङ्घसाधवे ॥ ६० ॥
सूरित्रयं वाचकषट्कमित्यदः
संस्थापितैर्यैरिलदुर्गपत्तने ।
प्रवर्तिनीनां पुनरष्टकं तदा
क्षणैस्तदप्याढ्यकृतैः पृथक् पृथक् ॥ ६१ ॥

अथ प्रा०को०ऊजलकाजाकृतविस्तर –

प्रभूतिविश्वाद्भुतपूरुषोद्भवा
प्राज्ञप्रजाप्रक्रियमाणसूत्सवा ।
नानाजिनावासविमानजित्वरी
या राजते राजगृहप्रभा पुरी ॥ ६२ ॥
सीरोहिकायामिह वासिनौ सना
लक्षक्षमानेतुरमात्यपुङ्गवौ ।
शत्रुञ्जयादावतिविस्तरेण यौ
यात्राकृतेः सङ्घपती च राजतः ॥ ६३ ॥
सदैव लोगस्सशतद्वयीतनू-

वसुधां मनोहृत्य निपीय निस्समाम् ।
ऊरीकृतं तद्वदनाम्बुजन्मना
ब्रह्मव्रतं राजसमाजसाक्षिकम् ॥ ७० ॥



परःसहस्रैरिह रूप्यटङ्ककै-
स्ताम्बूलदानेन सतां तनूमताम् ।
ताभ्यां महेभ्यावलिविस्मयावहः
कीर्तिप्रसत्तिर्विहितस्तदा महः ॥ ७१ ॥

( दशभि. कुलकम् )

अथ सं०सहसावि०मह –

यः कुम्भकर्णादिमहीशसत्कृतः
सङ्घाधिनेता धरणाभिधः सुधीः ।
चतुर्मुखं चैत्यमचीकरद् जना-
श्चर्यावहं राणपुरान्तरार्हतम् ॥ ७२ ॥

श्रीरत्नसिंहः प्रथमः सहोदर-
स्तस्याऽभवद् यः सुकृताम्बुसागरः ।
तस्याऽङ्गजः सालिगनामसङ्घराड्
यो वंशवाले जिनसौधकारकः ॥ ७३ ॥

दानादिपुण्याचरणे परायण-
स्तस्योद्वहः श्रीसहसाह्वयोऽस्ति यः ।
श्रीग्यासदीनेन कृतश्च मालवा-
धीशेन धर्माधिकधीसखाग्रणीः ॥ ७४ ॥

पुण्योपदेशं सुमतिस्थसुन्दरा-
चार्येश्वराणां हृदये निधाय सः ।
नातिक्रमन् पूर्वजमार्गमुत्तमं

न्यायार्जितैर्नैकहिरण्यराशिभिः ॥ ७५ ॥
लक्षक्षमापत्यनुमत्यवाप्तितः
श्रीअर्बुदोच्चाऽचलदुर्गशृङ्गके ।
प्रासादमुत्तुङ्गमकारयच्चतु-
र्मुखं मरुद्धाममुषं विभूषया ॥ ७६ ॥
स्वकारितं रीतिखदृक्क्षमामणैः
पूर्णं यदेकं जिनबिम्बमुज्ज्वलम् ।
तच्चान्यदर्चात्रयमत्र तत्समं
संस्थापयामास यकैः प्रतिष्ठितम् ॥ ७७ ॥
( षड्भिः कुलकम् )

अथ मण्डपीयसं०वेलादिरचितोत्सव –

श्रीसुमतिसुन्दराणामाचार्याणां निशम्य मधुरगिरम् ।
वेल्लाकः श्रद्धालुर्विशेषसुकृतैकरसिकोऽभूत् ॥ ७८ ॥
जिनयात्राकरणमनाः सपदिसुरत्राणदत्तफरमाणः ।
व्यवहारिव्रजमञ्जुलतमं समादाय सङ्घमसौ ॥ ७९ ॥
यावन्मण्डपदुर्गाद् रतलामद्रङ्गमागमद् रङ्गात् ।
तावत् तत्र ससङ्घा धन्या अन्ये घना मिलिताः ॥ ८० ॥
यच्छिष्यसुमतिसुन्दरसूरिभिराधायि सङ्घपतितिलकः ।
वेल्लादीनां लक्ष्मीवतां द्विपञ्चाशतस्तदनु ॥ ८१ ॥
वर्णा इव के व्यञ्जनगात्राः केचित् स्वराश्च बिन्दुयुताः ।
मात्राश्रितास्तदा कति पत्रस्था वर्णितास्तज्ज्ञैः ॥ ८२ ॥
पृथक् पृथग् वात्सल्यं सत्सु दुकूलादिभिश्च ताम्बूलम् ।
निर्मायाऽमी निखिलाः क्रमादितः प्रापुरिलदुर्गम् ॥८३॥
प्रतिपाद्य स्नात्रमहं प्रतिजिनमन्दिरमिह ध्वजारोपम् ।

मुदिता ववन्दिरे ते यान् गुरुराजान् सवैनयिकम् ॥८४॥
परदेवाह्वार्यमहामहार्तिहर्ता तथेष्टसुखकर्ता ।
श्रीआश्वसेनिरधुना प्रभुरास्ते जीरपल्लिपुरे ॥ ८५ ॥
तत्प्रथममस्य यात्रा क्रियते मत्वेति सङ्घपतयस्ते ।
गत्वाऽऽशु तत्र नेमुस्तं चामेयं गुणामेयम् ॥ ८६ ॥
रचयन्ति स्म विचित्रानत्र महांस्ते मुदेन्द्रमालां च ।
गुणराजसङ्घराजः स्वाढ्यशतैः पर्यधाद् बहुभिः ॥ ८७ ॥
नवभिष्टङ्कसहस्रैरर्बुदतीर्थे तथैव वेल्लाकः ।
इन्द्रस्रक्परिधाता सद्वात्सल्यादिकर्ताऽऽसीत् ॥ ८८ ॥
राणपुरेऽथ चतुर्मुखचैत्ये वेल्लाकधर्मसिंहाद्याः ।
देवकुलिका अनेकाः कृतोत्सवाः कारयाञ्चक्रुः ॥ ८९ ॥
तदनु तदानी सिद्धक्षेत्रादावर्हतः समभ्यर्च्य ।
इलदुर्गे पुनरेत्य प्रणता गणतायिनस्तैर्ये ॥ ९० ॥
वेल्लाकेन च वर्धापिताः सुवर्णादिनाणकैर्गुरवः ।
परिधापिताः शतत्रयमितसंयतपरिवृता वेषैः ॥ ९१ ॥
तेनैव सोमसागरगणेस्तदा यैरदायि विबुधपदम् ।
पावकशैले शम्भवनाथमथानम्य सङ्घेशाः ॥ ९२ ॥
हृदि निर्वृतिमन्तस्ते मालवनीवृति निजालयानाऽऽपुः ।
देवाह्वानाद्युत्सवमपि व्यधुर्मण्डपे केऽपि ॥ ९३ ॥

( षोडशार्याकुलकम् )

अथ सं०धर्मसिंहकृतविस्तर –

आकार्य सुमतिसुन्दरसूरिवरान् सोत्सवेन विनयेन ।
धर्म्येऽन्यधर्मसिंहः प्रक्लृप्तवान् पिप्पलीयपुरे ॥ ९४ ॥
देवाह्वानकपञ्चम्युद्यापनमुख्यमप्रमेयमहम् ।

अयुताधिकस्वसारव्ययाद् रयात् सङ्घभक्तिविधौ ॥ ९५ ॥
( युग्मम् )

अथ सं०भादाआनाजनितमह'-

देवासपर्युपासकवर्यौ यौ भद्रकानकाभिख्यौ ।
कृतवन्तावुद्यापनजिनप्रतिष्ठादिनैकमहान् ॥ ९६ ॥
ताभ्यां पुनरारेभे परिधापनिका गणे हि वरवेषैः ।
यच्छिष्यसुमतिसुन्दरसूरिवचःसौधरसपानात् ॥ ९७ ॥
( युग्मम् )

अथाऽत्रैव पुरे सं०-देवसीप्रथितविस्तर.-

प्राग्वाटपुरुषरत्नं माफरमलिकस्य मान्यमन्त्रीशः ।
श्रीदेवसिंहसुकृती गणस्य वेषार्पणप्रवणः ॥ ९८ ॥
चन्द्रोदयादिपञ्चत्रिंशत्प्रमितोपकृत्युपेतान् यः ।
देवालयान् नवीनानकारयत्तीर्थकरैसंख्यान् ॥ ९९ ॥
तेषु चतुर्विंशतिजिनपट्टान् पित्तलमयांश्च बहुवित्तैः ।
सङ्घेंशुकादिदानैर्महामहं मण्डयित्वा च ॥ १०० ॥
कारयति स्म स तेषां ततः प्रतिष्ठां यदन्तिषत्प्रष्ठैः ।
आगममण्डनवाचकपादैर्दत्तोत्तमानन्दैः ॥ १०१ ॥
( चतुर्भिः कलापकम् )

अथ सा०मेघाजीवणजनितविस्तर'-

श्रीश्रीमालीमण्डपवासी यो मालवाधिपतिमित्रम् ।
माफरमलिकेत्यपरं नाम धरन्मेघमन्त्रिवरः ॥ १०२ ॥
यस्याम्बादिकुटुम्बं पूर्वं श्रीसोमसुन्दरगुरूणाम् ।
भृशमनुरागभृदासीद् येष्वधुना यश्च सपरिकरः ॥ १०३ ।
गुरुहाटकटङ्कयुतान् दशसेरमितांस्तु मोदकान् मधुरान् ।
निखिलजातिनिवासेष्वलम्भद् मण्डपादौ सः ॥१०४॥

मेदिन्यामुदकं यदेह न ददेऽम्भोदेन देहिव्रजे
युक्तः स्वाऽनुजजीवनेन गुणिना मेघस्तदानीमसौ ।
सत्रागारमुखं सृजन्नुरुवृषं सत्सङ्घसन्तोषकृद्
दृष्टः स्पष्टमहाबलः किल शुची रैटङ्कलक्षैः स्वरैः॥१०५॥

( चतुर्भि कलापकम् )

एकद्वित्रिप्रभृतिभिरयुतैर्लक्षैरपि स्वटङ्कानाम् ।
ये जनिताः सद्भिरिह प्रायस्ते विस्तराः प्रोक्ताः ॥ १०६ ॥
येषां श्रीसूरिराजामपरिमितजिनस्वामिमूर्तिप्रतिष्ठा-
चार्योपाध्यायमुख्यप्रवरपदविधावास्तिकैर्विस्तरा ये ।
न्यायाऽऽत्तप्राज्यवित्तव्ययकरणतया निर्मितास्ते मयाऽपि
ख्याता ज्ञाताश्च दृष्टा इह तु कतिपये वारके ये यदीये ॥१०७॥
यैर्विबुधादिपदेषु क्रियमाणेषु क्षणाः प्रणीता ये ।
गृहिभिस्तत्परिमाणं न कोविदः कोऽपि कर्तुमलम् ॥ १०८ ॥
युगवरसमलक्ष्मीसागरा भव्यनव्या-
न्यतनुसुकृतकृत्यान्युत्सवैरेवमुव्र्याम् ।
परमगुरव एते निर्भमा निर्ममाणा-
श्चिरमिह विजयन्ते स्वाऽऽप्ततत्त्वं ब्रुवाणाः ॥ १०९ ॥
श्रीमन्मालवमेदिनीन्दुवदनालङ्कारहारप्रभो-
रुग्रामागरवासिकर्मतनयश्रीरत्नसङ्घप्रभोः ।
आक्षेपाद्विधुवेदवर्ष्मवसुधावर्षे सुभिक्षोद्भवे
लक्ष्मीसागरसूरिराजविलसद्भाग्यप्रकर्षस्तवे ॥ ११० ॥
श्रीजम्बूसमसोमसुन्दरगुरोः श्रीसोमदेवाह्वयः
शिष्यः सूरिवरश्च शिष्यवृषभश्चारित्रहंसोऽस्य यः ।
तस्य श्रीविबुधस्य शिष्यशिशुना काव्ये मुदा निर्मिते

सर्गोऽयं तु तृतीयको गुरुगुणाद्रत्नाकराख्यायुते ॥१११॥
( युग्मम् )

इति परमगुरुश्रीलक्ष्मीसागरसूरिविधीयमानश्रीजिनार्चाऽनूचा-
नादिपदस्थापनावसरप्रौढोपासकप्रणीतोत्सवपरम्परावर्णनगर्भो
गुरुगुणरत्नाकरनाम्नि काव्ये तृतीयः सर्गः ॥



अर्हम्

# अथ चतुर्थः सर्गः ।



श्रीजेसिंगमहीपाख्यरत्नमेघादिधीमताम् ।
यात्रादिविस्तरं वक्ष्ये जातं यद्वारकेऽद्भुतम् ॥ १ ॥
सोमसुन्दरसूरीन्द्रजनकस्वजनस्य च ।
पूर्वं पूर्वजनामानि रत्नाकस्य कति ब्रुवे ॥ २ ॥

यथा—

या श्रीविवेकाधिकगूर्जरत्रा-
भूभूषणाऽऽभाऽस्ति पुरी पवित्रा ।
सुवर्णपूर्णाऽचरसालराढा
लङ्कासमा सामढिकेति रूढा ॥ ३ ॥
तत्र प्रसर्पत्सुखंदृष्टिमान-
भुजाबलः पुण्यजनाधिपालः ।
नवग्रहादिप्रतिबन्धकारी
मन्दोदरीनाथतयाऽन्वितः सन् ॥ ४ ॥

प्राग्वाटवंशोदधिमध्यवर्ती
   यो जैत्रसिंहो दशकन्धराभः ।
रामाद्यजेयः कुतुकं तु सोम-
   युक्सुन्दराणां पितृपूर्वजोऽभूत् ॥५॥
(युग्मम्)

तस्याङ्गभूरिन्द्रजिदिद्धऋद्धिः
   कीनाशतामुक्लिबूटडाख्यः ।
कालाभिधस्तस्य च सूनुरासीद्
   दासीकृताऽसीमपुमान् महोभिः ॥ ६ ॥

कालात्मजाः षट् खलु नोऽवेदा-
   सद्गाङ्गदेसामलधीरवीराः ।
तुर्यः सुतः सामलनामधेयो
   यस्तेषु तेजस्विनरैरहार्यः ॥ ७ ॥

जज्ञेऽर्जुनाभः स जने सुभद्रा-
   नुषङ्गरङ्गः स्वपरोपकारी ।
धर्मोद्वहोपास्तिपरोऽपि चक्रे
   न भीमकृष्णाश्रयमत्र चित्रम् ॥८॥
(युग्मम्)

वेदाः किमेते कमनोद्भवत्वात्
   किंवा समुद्राः कमलालयत्वात् ? ।
क्षोण्यां सकर्णैरिति वर्ण्यमाना-
   श्चत्वार आसंस्तनयास्तदीयाः ॥९॥

यथार्थनामा धुरि सज्जनोऽभूद्
   निम्बो द्वितीयः कटु-ता-पहारी ।

मनाभिधानः सुमनास्तृतीयो
लम्पाकसंज्ञः सुकृती चतुर्थः ॥१०॥
( युग्मम् )

यः सज्जनः स्तोकधनस्ततः स-
मात्मीयनिम्बादिकुटुम्बयुक्तः ।
स लुप्तदुष्कालबलावकाशं
समागमद् मालवमध्यदेशम् ॥११॥

अथ तत्र तस्य वासस्थाननगरवर्णनम्-

यदा नृपाद्या विषमाद्रिवप्रा-
दिषु प्रनष्टाः परचक्रभीताः ।
यस्य प्रभावाद् यदभूत्तदार्य-
प्रजाभिराकीर्णमशङ्किताभिः ॥ १२ ॥

भूतग्रहोद्भावितदुष्टदोषा-
स्तुरुष्कचौरादिनरास्त्वशेषाः ।
यत्र स्थितं यत्पदपर्युपास्ते-
र्नोपद्रवन्त्याहंतजन्तुजातम् ॥ १३ ॥

वीरस्य तस्यात्यवदातमूर्त्या
भ्राजिष्णुजैनालययुक्तमध्यम् ।
यच्चास्ति भूरिव्यवहारिरम्यं
तस्मिन् पुरं पर्णविहारसंज्ञम् ॥ १४ ॥

स्वबन्धुवर्गेण समं समोदं
स सज्जनस्तत्र चकार वासम् ।
योगो भवेद् यत्र च देवगुर्वो-
र्गृही हि तस्मिन् वसतिं विदध्यात् ॥ १५ ॥
( चतुर्भि. कलापकम् )

रम्भानिभा रूपरमाऽतिरेका
छेका विवेकादिगुणप्रवेका ।
श्रद्धावती साधुषु सार्वधर्मे-
ऽमुष्य प्रियाऽजायत पूर्णदेवी ॥ १६ ॥
जातस्तयोः सत्तनुरङ्गजन्मा
कर्माभिधः स क्रमतो महीयान् ।
यद्भागधेयाज्जनराज्यमान्यः
स सज्जनः प्राज्यधनोऽजनिष्ट ॥ १७ ॥
ततः स कर्माख्यकृती सवित्रा
सोमीति कन्यां परिणायितः सन् ।
बभूव भाग्याऽभ्युदयाद् महेभ्यः
सभ्यः सदभ्यस्तसमस्तविद्यः ॥ १८ ॥
अक्ष्यन्तरिक्षाक्षरसाङ्कवर्षे
यात्राकृते सिद्धधराधरादौ ।
यः प्राप सङ्घेशपदं प्रथीयो-
महेन भूयोविभवव्ययेन ॥ १९ ॥
अथ कर्माकस्य सुताख्या –
तस्याङ्गजा जाग्रदभङ्गुराया
जातास्त्रयो रत्न-सुजेस-मेघाः ।
खाम्भी तथा माणिकिचारुहीरू
तिस्रः सुता रूपगुणैः प्रतीताः ॥ २० ॥
अथास्य वासस्थानाऽऽगरनगरवर्णनम्–
विचित्रपोतावलिशालिलोकं
हार्दं दधच्चन्द्रवसूदयेन ।

सरस्वतीधीवरजीवराजी-
लावण्यजित् पुण्यजिनालयं च ॥ २१ ॥
क्षमाधरैर्विप्रवरैरपारै-
रासेवितं वारिदवाहिनीभिः ।
यद्भाति नानाभवनाभिरामं
रत्नाकराभं सकलाप्तरङ्गम् ॥ २२ ॥
गृहे गृहे साऽस्य पुरस्य नाम्न्या-
गरेतिरावोऽस्ति किलेति मत्वा ।
सरोमिषाद् यत्र च सागरेति
प्रापाऽर्णवः स्थापयितुं निजाह्वाम् ॥ २३ ॥
तत्तत्तटद्वीपभवानि साकं
तेनाऽऽगमन्नङ्गिरतिप्रदानि ।
रसालजम्बूमुखशाखिलेखा-
शालीनि यस्मिन् किमु काननानि ? ॥२४॥

अथ यत्रस्थजिनार्चावर्णनम्–

सदासितानन्तपदाश्रितस्य
श्रीपार्श्वभर्तुः पुरुषोत्तमस्य ।
मूर्तिर्जगन्नाथजुषां जनानां
यत्र स्थिता यच्छति वाञ्छितार्थम् ॥२५॥
सद्दक्षिणावर्तकशङ्खसाम्या
माहात्म्यरम्या नवपल्लवस्य ।
वामेयदेवस्य यदन्तरस्था
परा पिपर्ति प्रतिमा परं शम् ॥ २६ ॥
सत्रा सगोत्रैः स तदागराख्यं

प्राप्तः पुरं पर्णविहारपुर्याः ।
कर्माकक्रुत्युत्तमविश्वकर्मा
धर्मादराभ्यागतकामशर्मा ॥ २७ ॥
( सप्तभिः कुलकम् )

हरिप्रियाऽनेकसुपर्वलोक-
प्रत्तेष्टसन्तानवितानतारम् ।
स्वःसद्मवद्वासकृते च तस्मिन्
व्यधापयत्सौधमसौ धनीशः ॥ २८ ॥

अथास्य पुत्रत्रयवर्णनम्—

तेऽथ त्रयो रत्न-सुजेस-मेघा-
लोकेशलक्ष्मीशमहेशकल्पाः ।
धूतेन्द्रनागेन्दुघनोद्धवर्णाः
क्रमेण चाष्टादशवर्णवर्ण्याः ॥ २९ ॥

उपात्तहंसद्विजराजराजद्-
वृषाः सुखादिष्टपदाभिगत्यै ।
विज्ञातकौतूहललास्यरङ्गा
भान्त्यत्र चित्रं न कुशास्त्रसङ्गाः ॥ ३० ॥
( युग्मम् )

अथैषां कुटुम्बनामानि—

रत्नस्य सावित्र्युपमात्मरूप-
श्रिया प्रिया राउमिति प्रतीता ।
कर्णाभिधानस्तनुजश्च देव-
ब्रह्मेव वाग्वद् दुहिता रहीति ॥ ३१ ॥

जेसस्य जाया ह्यमरी रमेव
प्रियङ्करी प्राणभृतां नितान्तम् ।

जीवाह्वयः सूनुरनूनरूप-
स्मरोपमः पुण्यगुणैरुपेतः ॥ ३२ ॥
मेघस्य जन्योर्युगलं सुशीलं
देपूश्च रङ्गीरिति राजतेऽलम् ।
गौरीनिभा भूतगणे हिताऽऽद्या
गङ्गेव पुण्यैकरसालयाऽन्या ॥ ३३ ॥
( त्रिभिर्विशेषकम् )

न्यायार्जिताऽन्यूनधना वदान्या-
धन्याऽधिपास्तेऽवनिजानिमान्याः ।
तेजोयशोभासुरसङ्घमुख्या-
भान्ति त्रयोऽर्हद्गुरुभक्तिदक्षाः ॥ ३४ ॥

अथैषां पुण्यकरणीयमाह–

त्रिधा विशुद्ध्या विधिपूर्वमुग्रं
तेपे तपः पञ्चमिकातिथेस्तैः ।
तन्निर्ममेऽस्याद्भुतकृज्जनाना-
मुद्यापनं नन्दनकाननाभम् ॥ ३५ ॥

तद्यथा–

सज्झर्मलाः पुस्तकशालिताग्राः
पञ्च स्थिताः स्थापनिका यदन्तः ।
वेल्लल्लतावेष्टितपत्रशाखाः
कल्पद्रवोऽमर्त्यमता बभुः किम् ? ॥ ३६ ॥
चन्द्रोदयाश्चित्रचिता अपूर्व-
शचीवराढ्यैर्विहिता विमानाः ।
सर्वज्ञसत्राणि च बिम्बपत्रा-

ण्यदुः प्रमोदं सुमनोजनानाम् ॥ ३७ ॥
कुम्पाः कपर्द्यादिमया ह्युकुम्भाः
सश्रीकवर्णोद्भवहेतुभूताः ।
किमक्षमाला विविधप्रकाराः
कामप्रदाः कामदुघाश्च यत्र ? ॥ ३८ ॥
किं कैरवाण्यक्षवराः सुराद्रेः
पादास्तु रीरीकलशाः पृथूच्चाः ।
सल्लेखिनीकर्तरिकर्जुकम्बी-
छुर्यादयोऽर्था विहगा विचित्राः ? ॥ ३९ ॥
सखञ्जिकार्यांशुकपृष्ठकानि
नानाऽम्बुजालीयुतपल्वलानि ।
किं पञ्चवर्णानि वरेण्यपट्ट-
सूत्राणि सूनस्तबकाश्च यस्मिन् ? ॥ ४० ॥
वाप्यो गभीराः किमु वासकुम्प्यः
समुद्गका वर्तुलदीर्घिकाश्च ।
सन्मोदका मेदुरकन्दुकाभाः
क्रीडाकृतेऽस्मिन् विबुधव्रजानाम् ? ॥ ४१ ॥
यत्रौरसाः केसरिविष्टराणि
सद्धूपधानानि च वाहनानि ।
खज्जानि सज्जानि च चत्वराणि
नाकौकसामप्युपवेशनाऽर्थम् ॥ ४२ ॥
पत्राणि चित्राणि फलान्यनेक-
विधानि किं कल्पतरूद्भवानि ? ।
शाल्यादिशस्यानि च पेशलानि

प्रवालमुक्तामणिमण्डलानि ॥ ४३ ॥

श्रीधर्मशालासुरशैलमल्ला-
मेवंविधं स्वर्वनतुल्यमेतत् ।
येऽरीरचन् सज्जनरञ्जनार्थ-
मुद्यापनं मेदुरधर्मरङ्गाः ॥ ४४ ॥

( नवभिः कुलकम् )

तत्र क्षणे क्षान्तिमतां मुनीना-
मर्चामकार्षू रुचिरैश्च चीरैः ।
समीक्षणायाऽस्य च मीलितानां
स्वान्याऽमितग्राममहाजनानाम् ॥ ४५ ॥

( युग्मम् )

षड्दर्शनीयाचकजन्तुराशे-
राज्यादियुग्जेमनवित्तदानैः ।
तेषां निवासेऽनिशमास्ति सत्रा-
गारः क्षुधानाशकरोऽनिवारः ॥ ४६ ॥

प्रौढोत्सवं कल्पचरित्रसत्कं
प्रायः प्रकुर्युः प्रतिवर्षमेते ।
सप्तस्वपि प्रत्यहमार्हतेषु
क्षेत्रेषु हर्षाद् वपनं धनस्य ॥ ४७ ॥

अथ विशेषतो रत्नगुणवर्णनम्-

वितीर्णवान् कर्णनृपः सुवर्णं
दिनैकयामावधि याचकेभ्यः ।
योऽहर्निशं धान्यहिरण्यचीर-
दाता ततः सोऽस्य समः कथं स्यात्? ॥ ४८ ॥

श्रीवस्तुपालादिवदान्यमौलि-
ष्वाश्चर्यकृद् भास्यति रत्नवद् यः ।
दानादिपुण्यप्रथयेति मत्वा
रत्नाभिधां यस्य विधिर्व्यधत्त ॥ ४९ ॥

सद्वंशजं चापनिभं गुणाढ्यं
यमाश्रयद् मार्गणमालिकाऽरम् ।
आसाद्य सारं सुखभोगमस्माद्
महीधरानप्यधरीकरोति ॥ ५० ॥

यो धान्यदानाज्जगडूपमानः
श्रीसङ्घभक्त्या जगसीसमानः ।
द्रव्यव्ययी पेथडवद् नृपार्थं
सारङ्गवद् बन्दिविमोच्यथाऽऽस्ते ॥ ५१ ॥

तेष्वादिमस्याऽऽस्तिककुञ्जरस्य
तस्याऽथ रत्नस्य मनस्युदारे ।
श्रीतीर्थयात्राकरणाय कामं
मनोरथः प्रादुरभूद् महीयान् ॥ ५२ ॥

( पञ्चभि. कुलकम् )

ततोऽर्थिवीथीपृथुदौःस्थ्यदावो-
पशान्त्यमोघाऽनघदाननीरैः ।
मेघेन मेघप्रतिमेन साकं
सालोचयामास निजाऽनुजेन ॥ ५३ ॥

स्वजामिमाणिक्यविवोढुरप्ये-
तज्ज्ञाप्यते भोः! जयसिंहसाधोः ।
मेघोऽपि रत्नं प्रति हृष्टचेता-

यात्रोत्सुकश्चेति झगित्यवोचत् ॥ ५४ ॥

अथ सारङ्गपुरवासिस०जेसिंग-वर्णनम्-

यः सङ्घमुख्योऽखिलखानखोजा-
मीरुम्बराद्यैर्बहु मानितश्च ।
निःस्वाऽऽदिसत्त्वोद्धरणाय सत्रा-
गारं गरिष्ठं सततं विधाता ॥ ५५ ॥

श्रीसारसारङ्गपुराधिवासी
जेसिंगसाधुर्विनयी विवेकी ।
जीरादिपल्ल्यर्बुदतीर्थयात्रां
चिकीर्षुरासीदिह दानशौण्डः ॥ ५६ ॥

विज्ञैर्विधेया त्वरितं भवद्भिः
श्रीतीर्थयात्राकृतिसज्जिका भोः ! ।
तदैव रत्नप्रभृतेः स्वकृत्वा-
दित्यागरे ज्ञापितवांस्ततोऽसौ ॥ ५७ ॥

(त्रिभिर्विशेषकम्)

इष्टं तथा वैद्यवरोपदिष्ट-
माभाणकोऽद्याऽभवदेष सत्यः ।
सखा तृषार्थी यदयादथेदृग्
ज्ञायेत रत्नादिभिरित्यचिन्तयत् ॥ ५८ ॥

निमन्त्र्य यात्राकृतये सगोत्रान्
छाजूमुखान् स्वान् सकलान्वितश्च ।
हंसादिसङ्घाधिपतीननेकान्
कांश्चिन्नरान् वाहनवित्तदानैः ॥ ५९ ॥

संमील्य सङ्घं घनमागरादे-

राडम्बरै राजबलानुकारैः ।
कुटुम्बयुग् यावददोषलग्ने
प्रस्थानकेऽस्थात् प्रमदात् स रत्नः ॥ ६० ॥
( युग्मम् )

मेलाखनामण्डनयुग्महीपा-
हरिभ्रमाजाजकलक्षमुख्यैः ।
सीणोरकद्रङ्गनिवासिभिर्य
युक्तं प्रभूतैर्व्यवहारिवर्गैः ॥ ६१ ॥

तथा च सिन्दूरपुरादिसंस्थै-
स्तावत् स सारङ्गपुराच्चतुर्धा ।
सङ्घं समादाय महीपसन्तं
जेसिंगसाधुर्मिलितश्च तस्य ॥ ६२ ॥
( युग्मम् )

पर्यङ्किकाः प्राज्यरथांस्तुरङ्गान्
परःशतान् वेगसरान् गवोष्ट्रान् ।
उपस्कराद्यैः शकटांश्च सज्जी-
कृत्यार्हतामुन्नतये मतस्य ॥ ६३ ॥

सत्का यथा पर्णविहारकादे-
स्ततः पुरो मीलितभूरिसङ्घौ ।
जेसिंगरत्नौ सुखदप्रयाणैः
प्राप्तौ पुरं तौ रतलामनाम ॥ ६४ ॥
( युग्मम् )

श्रीमण्डपोर्वीधरसीबलीया-
भूर्वासिनः सङ्घगणैः समेताः ।
मन्त्रीशजाऊसहजादयस्ते

तदागमंस्तत्र निशम्य सद्यः ॥ ६५ ॥
धारोज्जयिन्यादिबृहत्पुरास्था-
स्त्वन्येऽपि धन्या बहवस्तदानीम् ।
सङ्घे तदीये मिलिता महेभ्याः
सिन्धुप्रवाहा इव वार्धिमध्ये ॥ ६६ ॥
( युग्मम् )

ततो महेन्द्रीतटवागडादौ
स मालवीयः सकलोऽपि सङ्घः ।
सर्पन् प्रतिग्रामपुरं जिनेन्द्र-
स्नात्रादिपुण्यं प्रथयन् हितार्थम् ॥ ६७ ॥
कुमारपालादिककारितार्ह-
त्प्रासादसौधर्द्धिविधूतनाकम् ।
श्रीराजदेशाभरणं समागा-
दीयद्दरं नाम पुरं क्रमेण ॥ ६८ ॥
( युग्मम् )

अथास्य समग्रसङ्घस्य वर्णनम्–

किं सार्थवाहो बहुवस्तुशस्तः
किं वा सुरत्राणबलं विशालम् ? ।
इत्याव्रजन्तः कति यत्र लोका
दूराद् यमालोक्य विकल्पयन्ति ॥ ६९ ॥
यस्मिन् महेशान् बहुशो वृषस्थान्
सतीगणांश्चाऽद्रिपतिर्निशम्य ।
तान् द्रष्टुमागात् सितशृङ्गसङ्गी
गुरूदरालीव्यपदेशतोऽसौ ॥ ७० ॥
पटादिकुट्यौघघनाभ्रपङ्क्त्या

भर्मादिभूषाद्युतिविद्युता वा ।
भेर्यादिवाद्यारवगर्जितेन
विभ्राजितस्तागपयश्चयेन ॥ ७१ ॥
नृत्यद्भ्रमद्याचककेकिचक्र-
प्रोच्चार्यमाणाऽमितकीर्तिकेकः ।
नभ्राड्निभो भाति तदाश्रितां गां
धत्ते न योऽन्तः किल कृष्णभावम् ॥ ७२ ॥
( युग्मम् )
यत्र प्रसर्पद्धनसारवारा-
वासान् घनः प्रेक्ष्य सतः समुद्रान् ।
स्वाभ्राणि तोयग्रहणाय तेभ्यः
प्रैषीत् प्रलम्बाम्बरसद्मदम्भात् ॥ ७३ ॥
( पञ्चभि कुलकम् )
केषां हि केषामिह पूरुषाणां
काराप्यते सङ्घपतित्वपुण्ड्रः ।
सम्भूय सङ्घेऽथ मिथः समेऽस्मि-
न्नालोचमेवं व्यधुरिभ्यसभ्याः ॥ ७४ ॥
अथेलदुर्ग–भूपालवर्णनम्–
भयेति वर्णद्वयमात्मदेशाद्
निष्काश्य येनाऽथ पृथग् विधाय ।
एकैकमस्थापि तमेव विश्वे
स्फूर्जन्निजाह्वायशसोरिवादौ ॥ ७५ ॥
तत्राधिनेताऽस्ति स भानुनामा
धामाऽस्तमाद्यद्विषमारिवर्गः ।

न्यायेन रामः सुकृताभिरामः
श्रीसार्वभौमस्तनुरूपकामः ॥ ७६ ॥
( युग्मम् )

तस्येशितुर्हाटकटङ्कपट्ट-
कूलादिकं ढौकनमभ्यकार्षुः ।
जेसिंगरत्नाद्यमहीपमुख्या-
स्तेनाऽपि बाढं बहु मानितास्ते ॥ ७७ ॥

स्नात्रध्वजारोपणपात्रनृत्या-
द्यत्युत्सवैः श्रीऋषभादिपूजाम् ।
विरच्य तत्राऽऽर्हतमन्दिरेषु
ववन्दिरे श्रीगुरवस्ततस्ते ॥ ७८ ॥

श्रीवाचकैर्विज्ञवरैश्च लब्धि-
समुद्रसंज्ञैरथ यद्विनेयैः ।
यावल्ललाटे तिलकः स चक्रे
जेसिंगरत्नादिधनीश्वराणाम् ॥ ७९ ॥

भेरीनफेरीस्वरनायकादे-
राकर्ण्य नादं तरणेश्च तावत् ।
त्रस्तास्तुरङ्गास्तदितस्ततोऽगु-
स्तेनारुणः सोऽपि रुषाऽभवत् किम्? ॥ ८० ॥

वाचंयमाचारचनात् सुदृष्टि-
रैरूप्यटङ्कादिसमर्पणेन ।
तेऽथाऽर्थिनां पञ्चविधार्थदानात्
ततो वितेनेऽद्भुतविस्तरैस्तैः ॥ ८१ ॥

श्राद्धास्तदा ते च बभूवुरष्टा-

शीतिप्रमाणाः किल सङ्घनाथाः ।
अर्हन्मतौन्नत्यकृतिप्रवीणा
धर्मिष्ठसान्निध्यधुराधुरीणाः ॥ ८२ ॥
सश्रीभरामारजनीसुवर्णाः
सद्राशिसङ्गाश्च सुखप्रसाराः ।
ये रेजुरस्तात्मतमःप्रचारा-
स्तुल्या वसुग्रावमितग्रहाणाम् ॥८३॥
तेष्वग्रिमौ श्रीजयसिंहरत्नौ
स्ववासरोषाभरणातिशोभौ ।
स्तः पुष्पदन्तप्रतिमौ त्वपूर्व-
तुरङ्गभाजौ वसुभासितोर्व्यौ ॥ ८४ ॥
नत्वा जिनेशान् सुगुरून्नरेशा-
ऽऽदेशात्ततस्ते शकुनैः प्रशस्यैः ।
श्रीपार्श्वनाथं मनसि स्मरन्तः
सन्तः पुरश्चेलुरथेलदुर्गात् ॥ ८५ ॥
द्विजिह्वराजे विपदन्तरिक्षे
रजोव्रजो नोभयमस्ति सङ्घे ।
तदाऽध्वगच्छच्छकटाश्वचक्र-
धाराखुरोत्खातधरातलेऽस्मिन् ॥८६॥
ते च प्रतिग्राममभङ्गतुङ्ग-
प्रासादसार्वप्रतिमाऽतिनीनाम् ।
पूजां सृजन्तः क्रमतः समीयुः
श्रीजीरिकापल्लिपुरं ससङ्घाः ॥ ८७ ॥

अथ तत्रस्थश्रीपार्श्वनाथवर्णनम्-

यन्नाममन्त्रस्मृतिमात्रतोऽपि

रोगा दरा दुष्टनराश्च नाशम् ।
सर्वे प्रयान्तीप्सितसिद्धयः स्युः
काले कलावप्यखिलाङ्गभाजाम् ॥८८॥
शश्वच्छिवाभोगपरस्त्रिलोकी-
व्यापी क्षितोद्यत्कलिकालकेलिः ।
संभूयते यस्य गुरुप्रभावः
प्रणम्रभूतार्पितभूरिभूतिः ॥ ८९ ॥
( युग्मम् )
तैस्तत्र यावद्ददृशे जिनेशः
श्रीपार्श्वनाथः प्रथिताऽर्थसार्थः ।
चक्षूंषि तावत् पुपुषुस्तथैषां
पीयूषयूषेण यथाऽऽर्द्रितानि ॥ ९० ॥
श्रीनालिकेरादिफलानि तस्य
प्रभोः पुरस्तेऽपि च ढौकयित्वा ।
नवाङ्गपूजां कनकादिटङ्कै-
र्निर्माय निर्मायहृदा प्रणामम् ॥९१॥
अर्थिष्वथाऽर्थाभरणादिदानं
दत्त्वा ततस्तोयपवित्रिताङ्गाः ।
अर्चैकरङ्गाः परिधाय पट्टं
पदादिवासांसि शुचीनि सद्यः ॥९२॥
लात्वा सुगन्धीनि सुमानि भोगं
कर्पूरकृष्णागुरुमिश्रितं च ।
क्रोशप्रमाणध्वजदानपूर्वं
सविस्तरं स्नात्रमहं वितेनुः ॥ ९३ ॥
( त्रिभिर्विशेषकम् )

श्रीआश्वसेनेरखिलप्रकारै-
रर्चा विरच्य स्वकचित्तभक्त्या ।
अमूमुचंस्ते च पुरागृहीता-
नभिग्रहानुग्रतरांस्तदग्रे ॥ ९४ ॥
दिनत्रयं चक्रतुरत्र सत्रा-
गारं गरिष्ठं जयसिंहरत्नौ ।
दुर्जेयदेवायतकोलिकोप-
कण्ठाद् व्यधाद् बन्दिविमोक्षमाद्यः ॥९५॥

अथ श्रीपार्श्वप्रभोः पुरस्ताद्विज्ञप्तिकृतिः-

देवस्त्वमेवासि युगेऽत्र जाग्र-
त्प्रभावधर्ताऽभिमतार्थकर्ता ।
प्रणेमुषामुल्वणसाध्वसोप-
द्रवापहर्ताऽपि च मुक्तिभर्ता ॥ ९६ ॥
याऽऽसीददृष्टे त्वयि नो दिदृक्षा
साक्षाच्च दृष्टेऽपि जिनाऽधुनाऽलम् ।
सा वर्धते पार्श्वविभोः पुरस्ताद्
विज्ञप्तिमेवं विबुधा व्यधुस्ते ॥ ९७ ॥
( युग्मम् )
वामेयदेवं विनयेन जीरा-
पल्लीललाम प्रणिपत्य धीराः ।
चिकीर्षवश्चार्बुदतीर्थयात्रां
समाययुस्ते तदुपत्यकायाम् ॥९८॥
ततोऽर्बुदाऽद्र्यध्वनि सङ्घलोको-
दन्याभिदे रत्नमुखा वदान्याः ।

सितोपलामिश्रितशीततोयैः
प्रपाः प्रतिस्थानमबीभरंस्ते ॥ ९९ ॥
धन्यास्तमारुह्य महीधरेशं
प्रापुश्च यावत्तदधित्यकायाम् ।
सङ्घैः समं ते ददृशुर्जिनेन्द्र-
चैत्यानि तावत् पुलकाङ्किताङ्गाः ॥१००॥

अथ श्रीअर्बुदतीर्थवर्णनम्–

उत्तुङ्गताया विपिनश्रिया वा
किं भूभृताऽनेन जितो हिमाद्रिः ।
श्वेतानि सर्वज्ञयुतानि सोऽस्यै-
तानि स्वशृङ्गाण्युपदीचकार ? ॥१०१॥
किंवा विमाना इह नन्दनाद-
प्यारामराढामधिकामवेक्ष्य ?।
देवाधिदेवस्य हि देवनाया-
यातस्य सद्विस्मयदायिनस्ते ॥१०२॥
व्याप्ते त्रिलोके कलिनाऽऽशु कल्कै-
र्धर्माः समस्ताः किमु मूर्तिमन्तः ? ।
तस्थुर्वलक्षा इह के तदाऽर्ह-
द्धर्म्याणि वीक्ष्येति विकल्पयन्ति ॥१०३॥
( त्रिभिर्विशेषकम् )

तेष्वादिदेवादिजिनाधिनाथा-
नद्राक्षुरुन्निद्रदृशः कृतीन्द्राः ।
ते यावता दूरितदुःखतापा-
स्तावन्मुदाऽद्वैतभृतश्च जाताः ॥१०४॥

ततो वसत्यां विमलादिमायां
स्नात्रोत्सवे तैस्तु विधीयमाने ।
द्वात्रिंशता स्फाट्यशतैः सपर्या-
ऽधादिन्द्रमालां जयसिंहसाधुः ॥१०५॥
स्वप्रेयसीयुक् तदनूपविश्य
श्रीकारिराजादिमवाहनेऽसौ ।
दानं ददौ गैरिककुञ्जराढ्यं
सत्कीर्तिकृत्युत्सुकयाचकेभ्यः ॥१०६॥
चन्द्रोज्ज्वलास्यः कृतपङ्कनाशः
क्षणात्क्ष्माभृज्जनपूरिताशः ।
ववर्ष तत्रावसरेऽर्बुदेऽसौ
सौवर्णटङ्कैर्नवमेघतुल्यः ॥१०७॥
( त्रिभिर्विशेषकम् )

पञ्चालिकाकोरणिकागजादि-
रूपेक्षणप्रत्तजनाद्भुतेषु ।
सर्वाष्वचैत्येषु युगादिमुख्या-
नानर्च देवान् विधिना ततो यः ॥१०८॥
श्रीअर्बुदेलामहिलाललाम !
श्रीनाभिसूनो ! सुमनोऽर्च्यधामन् ! ।
याऽऽस्ताऽभिरूपे भवदीक्षणार्थो-
त्कण्ठालता प्राक् स्वहृदालवाले ॥१०९॥
सा सिच्यमाना तव भक्तिवारा
त्वयीक्षितेऽद्येष्टफलैः पफाल ।
विज्ञप्तिमित्यादि विभोः पुरस्तात्

११४॥ इति खे साधु ॥१॥ ज्वरयति ज्वर ॥१॥ आदिशब्दादर्बुदादय ॥१३५॥

दोषज्ञस्तु भिषग्वैद्य आयुर्वेदी चिकित्सक· ।

रोगहार्यगदङ्कारः

दोषान् वातपित्तश्लेष्मलक्षणान् संकीर्णानसंकीर्णांश्च जानातीति दोषज्ञ· ॥ १ ॥ भिषि सौत्र, भेषति भिषक् "ऋधिपृथि-"॥(उणा-८७४)॥ इति किदच्, भिषज्यतीति वा ॥ २ ॥ विद्यामधीते वैद्य ॥ ३ ॥ आयुर्वेत्तीत्येवंशील आयुर्वेदी, आयुर्वेदिकोऽपि ॥ ४ ॥ कितो व्याधिप्रतीकारे सनि चिकित्सति चिकित्सक ॥ ५ ॥ रोगं हरतीत्येवंशीलो रोगहारी ॥ ६ ॥ अगदं करोत्यगद क्रियतेऽनेन वा अगदङ्कार· "सत्यागदाऽस्तो-" ॥३।२।११२॥ इति मोऽन्त ॥ ७ ॥

भेषज तन्त्रमौषधम् ॥ १३६ ॥

भैषज्यमगदो जायुः

भिषि सौत्र, भेषत्यनेन भेषजम् "भिषे-" ॥ (उणा-१३१) ॥ इत्यज· भिषज्यत्यनेन वा भेषजादिनिर्देशाद् गुण ॥१॥ तनोत्यारोग्यं तन्त्रम् "हुयामा-" ॥ (उणा-४५१) ॥ इति त्र, तन्त्र्यत इति वा ॥२॥ ओषधिरेव औषधं, पुंक्लीबलिङ्ग "श्रोत्रौषधि-" ॥७।२।१६६॥ इति स्वार्थेऽण् ॥३॥१३६॥ भेषजमेव भैषज्यं, भेषजादित्वाद् ट्यण् ॥ ४ ॥ अविद्यमानो गदोऽस्मिन् अगद ॥ ५ ॥ जयति रोगान् जायु, पुलिङ्ग "कृवापाजि-" ॥ (उणा १) ॥ इति उण् ॥ ६ ॥

चिकित्सा रुक्प्रतिक्रिया ।

उपचर्योपचारौ च

चिकित्सनं चिकित्सा ॥ १ ॥ रुज प्रतीकारो रुक्प्रतिक्रिया ॥ २ ॥ उपचरणमुपचर्या "समज-" ॥५।३।९९॥ इति क्यप् ॥ ३ ॥ घञि उपचार ॥ ४ ॥

लङ्घन त्वपतर्पणम् ॥ १३७ ॥

लङ्घ्यतेऽतिक्रम्यते रोगोऽनेन लङ्घन, लघु शोषणे इत्यस्य वा॥१॥ अपतृप्यते अपतर्पणम् ॥ २ ॥ १३७ ॥

जाङ्गुलिको विषभिषक्

जाङ्गुली विषविद्यामधीते जाङ्गुलिक, न्यायादिपाठादिकण्, विषभिषग्, विषवैद्य ॥ १ ॥

स्वास्थ्ये वार्तमनामयम् ।

सह्यारोग्ये

स्वस्थस्य भाव स्वास्थ्यं तत्र ॥ १ ॥ वृत्तिरत्रास्ति वार्तम् ॥ २ ॥ आमयस्या-

भावोऽनामयम् ॥ ३ ॥ सह्यते सह्यं "शकितकि-" ॥ ५।१।२९ ॥ इति य. ॥ ४ ॥ अरोगस्य भाव आरोग्यम् ॥ ५ ॥

पटूल्लाघवार्तकल्यास्तु नीरुजि ॥ १३८ ॥

पटति आरोग्यं पटु ॥ १ ॥ उल्लाघते स्म उल्लाघ "अनुपसर्गा क्षीब-" ॥४।२।८०॥ इति क्ते निपात्यते ॥ २ ॥ वृत्तिरस्याऽस्ति वार्त्त ॥३॥ कलयत्यारोग्य कल्य "स्थाच्छा "॥(उणा-३५७) इति य , कलासु साधुरिति वा ॥४॥ निष्क्रान्तो रोगाद् नीरुक् तत्र ॥ ५ ॥ १३८ ॥

कुसृत्या विभवाऽन्वेषी पार्श्वकः सन्धिजीवकः ।

पार्श्वमनृजु उपायो लञ्चादि , तेनाऽन्वेष्टा पार्श्वक " दाण्डाजिनिक–" ॥७।१।१७१॥ इति साधु ॥ १ ॥ सन्धिना जीवति सन्धिजीवक ॥ २ ॥

सत्कृत्याऽलङ्कृतां कन्यां यो ददाति स कूकुद ॥१३९॥

कोकते आदत्ते धर्म कूकुद , कुमुदादौ उदे निपात्यते ॥ १ ॥ ब्राह्मे विवाहे दाताऽयम् , यन्मनु –

" आच्छाद्य चार्हयित्वा च श्रुतशीलवते स्वयम् ।
आहूय दान कन्याया ब्राह्मो धर्म प्रकीर्तित " ॥ १ ॥ १३९ ॥

शेषश्चात्र—स्यात् कूकुदे तु कूपद पारिमित ॥

चपलश्चिकुर·

चप्यते चपल " मृदिकन्दि-" ॥ (उणा-४६५) ॥ इत्यल ॥ १ ॥ चिनोति चिनुते वा चिकुर "श्वशुरकुकुन्दुर-" ॥ (उणा-४२६) इत्युरे निपात्यते । यल्लक्ष्यम्– " ता वीक्ष्य लीलाचिकुरामनङ्ग स्वचापसौन्दर्यमदं मुमोच " ॥ २ ॥

नीलीरागस्तु स्थिरसौहृद ।

नील्या इव स्थिरो रागोऽस्य नीलीराग , स्थिरं सौहृदमस्य स्थिरसौहृद स्थिर-प्रेमा ॥ १ ॥

ततो हरिद्रारागोऽन्यः

तत स्थिरसौहृदादन्य क्षणमात्रानुरागी हरिद्राया इव क्षणिको रागोऽस्य हरिद्राराग ॥ १ ॥

सान्द्रस्निग्धस्तु मेदुरः ॥ १४० ॥

सान्द्र पीन स चासौ स्निग्धश्च ॥१॥ मेद्यतीत्येवंशीलो मेदुर "भञ्जिभा-सि-"॥५।२।७४॥ इति घुर. ॥ २ ॥ १४० ॥

गेहेनर्दी गेहेशूरः पिण्डीशूरः

गेहे एव नर्दति गेहेनर्दी ॥ १ ॥ एवं गेहेशूर "पात्रे समितेत्यादय" ॥३।१।९१॥ इति तत्पुरुष सप्तम्यलुप् च ॥ २ ॥ पिण्ड्यां शूर पिण्डीशूर ॥ ३ ॥

अस्तिमान् धनी ।

अस्तीत्यव्ययं धनार्थे, अस्ति धनमस्याऽस्ति अस्तिमान् ॥ १ ॥ धनमस्याऽस्तीति धनी ॥ २ ॥

स्वस्थानस्थः परद्वेषी गोष्ठश्वः

स्वस्थानस्थो य परान् द्वेष्टि स गोष्ठे श्वेव गोष्ठश्व "गोष्ठाते शुन" ॥७।३।११०॥ इत्यट् समासान्त ॥ १ ॥

अथापदि स्थितः ॥ १४१ ॥

आपन्नः

आपद्यते विपदं गच्छति स्म आपन्न ॥ १ ॥ १४१ ॥

अथाऽऽपद् विपत्तिर्विपत्

आपदनं आपत्, विपदन विपत् ॥१॥२॥३॥

स्निग्धस्तु वत्सलः ।

स्निह्यति स्म स्निग्ध ॥ १ ॥ वत्सोऽस्त्यस्य वत्सल, सिध्मादित्वाद् ल ॥२॥

उपाध्यभ्यागारिकौ तु कुटुम्बव्यापृते नरि ॥ १४२ ॥

उपाधीयते उपाधि, पुंलिङ्ग ॥ १ ॥ अभ्यागारमस्याऽस्ति अभ्यागारिकः "अतोऽनेकस्वरात्" ॥७।२।६॥ इतीक । कुटुम्बे कलत्रादौ व्यापृत पोषणोद्युक्तस्तत्र ॥ २ ॥ १४२ ॥

जैवातृकस्तु दीर्घायुः

जीवति चिरं जैवातृक "जीवेरातृको जैव् च" ॥ (उणा-६७) ॥ इत्यातृकः ॥ १ ॥ दीर्घमायुरस्य दीर्घायु, आयुष्मानपि ॥ २ ॥

त्रासदायी तु शङ्करः ।

शङ्क्यतेऽस्मात् शङ्कर, "वाश्यसि-" ॥ (उणा-४२३) इति बहुवचनादुर, हृदि शङ्कुमिव राति ददातीति वा ॥ १ ॥

अभिपन्नः शरणार्थी

अभिमुखं पद्यते स्म अभिपन्न, शरणमर्थयते शरणार्थी ॥ १ ॥

॥ अर्हम् ॥

# यशोविजयजैनग्रन्थमाला

नाम

संस्कृतप्राकृतभाषयोर्नानाविधप्राचीनकाव्यनाटकच्छन्दोऽलङ्कारव्याकरणन्यायज्यौतिषादिग्रन्थानां संग्रहः ।

शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरिपादाम्भोजचञ्चरीकायमाणाभ्यां

श्रावकपं०-हरगोविन्ददास-बेचरदासाभ्यां संशोधितः ।

२४

स्याद्वादागमवीचिनालिविलसत्-संसूक्तिमुक्तावहा
प्रौढप्रातिभपूर्वसूरिनिशित-प्रेक्षागुणैर्योजिता ।
एषाऽनन्यसुविज्ञधर्मविजयाचार्य-प्रसादाच्छुभा
विज्ञानं प्रतिमासमाकलयतु श्रीग्रन्थमाला सताम् ॥ १ ॥

PRINTED AND PUBLISHED BY SHAH HARKHCHAND BHURABHAI
AT THE DHARMABHYUDAYA PRESS,
BENARES CITY.

वार्षिकमूल्यं रूप्यकाष्टकम् ।

# विषयानुक्रमः ।



प्रकरणानि पृष्ठानि





कारः,प्रतीत्यादिभेदतस्तद्भेदसिद्धेः। न चासन्ताविमौ,तथाप्रतिपत्तेः। न च द्विचन्द्रादिप्रतिपत्तिवद् भ्रान्तेयम्, अविगानतस्तद्भावात्। न च चित्रे निम्नोन्नतप्रतिपत्त्या व्यभिचारः,तत्र समस्पर्शज्ञानबाधकोपलब्धेः। न चैवमस्यास्तत्सिद्धिः, तथानुभवाभावात्। न च दोषक्षये तद्भावे तत्तुल्यता, तद्भावे प्रमाणाभावात्। न च योगिज्ञानं प्रमाणमत्र, तत एव हेतोः। न च तथाविधस्तदुपदेश एव प्रमाणम्, तस्याप्याकारशून्यत्वे तदसंभवात्। न चासत्यपृष्ठा भ्रान्तिप्रतिपत्तिः, क्वचिददर्शनात्; अन्तरुपप्लवसमुद्भवाया अपि तद्द्रष्टुस्तदध्यारोपेण प्रवृत्तेः। न चाजन्मानुपलब्धपीतभावकामलिशङ्खपीतप्रतिपत्त्या व्यभिचारः, तद्भावजन्मान्तरोपलब्धिबलेन तत्प्रवृत्तेः, अन्यथाऽतिप्रसङ्गात्। इत्यनुपचरिताऽऽकारसिद्ध्या पर्यायसिद्धिः॥

न चेत्यादि। न चेह वस्तुनि, किञ्चिद् न निवर्तते,अपि तु निवर्ततेऽपि किञ्चित्। कुत इत्याह– एकान्तेत्यादि। एकान्तानिवृत्तौ सत्यां, तत्त्वेन तद्विलक्षणबुद्ध्यभावतः प्रक्रमाद् घटविलक्षणबुद्ध्यभावत' कारणात्। किमित्याह– कपालप्रतिपत्त्यसिद्धेः। असिद्धिश्च विशेषाभावात्, विशेषाभावश्च तस्य प्रक्रमाद् घटवस्तुनः, अप्रच्युतानुत्पन्नस्थिरैकस्वभावत्वात्। न चेत्यादि। न चोर्ध्वाद्याकार एवैकान्तेन कपालाद्याकारः प्रतीत्यादिभेदत, आदिशब्दात् कार्यभेदग्रहः, तद्भेदसिद्धेरूर्ध्वाद्याकारकपालाद्याकारयोर्भेदसिद्धेः। न चासन्ताविमौ ऊर्ध्वाद्याकारकपालाद्याकारौ, तथाप्रतिपत्तेरस्तित्वेन प्रतिपत्तेः। न च द्विचन्द्रादिप्रतिपत्तिवद् भ्रान्तेयमूर्ध्वाद्याकारकपालाद्याकारप्रतिपत्तिः। कुत इत्याह– अविगानतः अविगानेन, तद्भावादधिकृतप्रतिपत्तिभावात्। न च चित्रे निम्नोन्नतप्रतिपत्त्या अविगानभावोत्पन्नया,व्यभिचारोऽनैकान्तिकता। कुत इत्याह– तत्र चित्रनिम्नोन्नतप्रतिपत्तौ, समस्पर्शज्ञानबाधकोपलब्धेः। न चैवमस्या ऊर्ध्वादिभेदप्रतिपत्तेः, तत्सिद्धिरभेदज्ञानबाधकसिद्धिः। कुत इत्याह– तथाऽनुभवाभावात् तथा तेन प्रकारेण भेदज्ञानबाधक-

भावलक्षणेनाऽनुभवाभावात् । न च दोषक्षये सत्यात्मन एव, तद्भावे अभेदज्ञानबाधकभावे, तत्तुल्यता चित्रनिम्नोन्नतप्रतिपत्तितुल्यता । कुत इत्याह– तद्भावे अभेदज्ञानबाधकभावे, प्रमाणाभावात्– दोषक्षये एवभूतं ज्ञानं भविष्यति नान्यादृशमित्यत्र न प्रमाणम् । न च योगिज्ञान प्रमाणमत्र तद्भावे । कुत इत्याह– तत एव हेतोः प्रमाणाभावादेवेत्यर्थ । न चेत्यादि । न च तथाविधो भेदाभावप्रतिपादकः "असन्तो भेदा. सदाभावात्" इत्यादिस्तदुपदेश एव योग्युपदेश एव, प्रमाणमत्र । कुत इत्याह– तस्यापि योगिन , आकारशून्यत्वे सति, तदसंभवात् उपदेशासंभवात् , किं ह्यनाकार उपदिशति ? । दोषान्तरमाह– न चेत्यादिना । न चासत्यपृष्ठाऽसत्यपूर्वा, भ्रान्तिप्रतिपत्ति । कुत इत्याह– क्वचिददर्शनात् असत्पृष्ठाया भ्रान्ते. । अन्तरुपप्लवसमुद्भवाया अपि चिन्मात्रोपलब्ध्यादिरूपाया , तद्द्रष्टु सत्यमात्राद्रष्टु , तदध्यारोपेण सत्यमात्राध्यारोपेण केशाद्यपेक्षया प्रवृत्ते. कारणात् । न चेत्यादि । न च आजन्मानुपलब्धपीतभावश्चासौ कामली च नालिकेरद्वीपवासिप्रख्यस्तस्य शङ्खपीतप्रतिपत्तिस्तया व्यभिचारो न च । कुत इत्याह– तद्भावश्च पीतभावश्च जन्मान्तरोपलब्धिश्च संसारानादितया तद्भावजन्मान्तरोपलब्धी एतयोर्बलं सामर्थ्यं तेन, तत्प्रवृत्तेः अनन्तरोदितपीतप्रतिपत्तिप्रवृत्ते., अन्यथैवमनभ्युपगमे । किमित्याह– अतिप्रसङ्गात् पञ्चवर्णातिरिक्तवर्णान्तरप्रतिपत्तिप्रसङ्गादित्यर्थः । इत्येवम् , अनुपचरिताकारसिद्ध्या हेतुभूतया, पर्यायसिद्धिराकारस्यैव पर्यायत्वादिति ॥

**एतेन स्याद्वादरेका– न हि कूटस्थनित्यतयेत्यादि यदाशङ्क्योक्तं पर्यायव्यतिरिक्तस्य द्रव्यस्यासिद्धेरित्यादि, तदपि प्रतिक्षिप्तमेवाऽवगन्तव्यम् , कथञ्चिद्व्यतिरेकासिद्धेरिति, तथाहि–**

"अन्योन्यव्याप्तिभावेन द्रव्यपर्याययोः कथम् ।
भेदाभेदो विरुद्धः स्यात् तद्भावानुपपत्तितः ? ॥ १ ॥
नान्योन्यव्याप्तिरेकान्तभेदेऽभेदे च युज्यते ।

अतिप्रसङ्गादैक्याच्च शब्दार्थानुपपत्तितः ॥ २ ॥
अन्योन्यमिति यद्भेदं व्याप्तिश्चाह विपर्ययम् ।
भेदाभेदे द्वयोस्तस्मादन्योन्यव्याप्तिसंभवः ॥ ३ ॥
एवं शबलरूपेऽस्मिन् व्यावृत्त्यनुगमावपि ।
स्याद्वादनीतितः सिद्धौ तथानुभवसुस्थितौ ॥ ४ ॥
इत्थं प्रमाणसिद्धेऽस्मिन् विरोधोद्भावनं नृणाम् ।
व्यसनं धीजडत्वं वा प्रकाशयति केवलम् " ॥ ५ ॥

इत्यलं विस्तरेण ॥

॥ नित्यानित्यवस्त्वधिकारः समाप्तः ॥

॥ इति द्वितीयः परिच्छेदः ॥

**एतेनेत्यादि** । एतेनानन्तरोदितेन, स्यादारेका— न हि कूटस्थ-नित्यतयेत्यादि यदाशङ्क्योक्त पूर्वपक्षग्रन्थे, पर्यायव्यतिरिक्तस्य द्रव्यस्यासिद्धेरित्यादि । तदपि सर्वं प्रतिक्षिप्तमेवावगन्तव्यम् । कुत इत्याह— **कथञ्चिद्व्यतिरेकासिद्धेः** पर्यायेभ्यो द्रव्यस्येति । एतदेवोपदर्शयति— **तथाहीत्यादिना** । तथाहीति पूर्ववत् । अन्योन्यव्याप्तिभावेन हेतुना । कयोरित्याह— **द्रव्यपर्याययोः** । किमनयोरित्याह— **कथं भेदाभेदो विरुद्धः स्यात्** नैव । कुत इत्याह— **तद्भावानुपपत्तितः** अन्योन्यव्याप्तिभावानुपपत्त.॥१॥ तथाहि— नान्योन्यव्याप्तिरेकान्तभेदेऽभेदे च युज्यते। कुत इत्याह— **अतिप्रसङ्गात्** , एकान्तभेदे हिमवद्विन्ध्ययोरप्यन्योन्यव्याप्तिप्रसङ्गात् , ऐक्याच्च एकान्ताभेदेऽणोरप्यात्मनैवान्योन्यव्याप्तिप्रसङ्गात् । तथा, शब्दार्थानुपपतित्त कारणात् ॥ २ ॥ अनुपपत्तिश्च अन्योन्यमिति यद्भेद व्याप्तिश्चाह विपर्ययमभेदम् । यस्मादेव, भेदाभेदे द्वयोस्तस्मादन्योन्यव्याप्तिसम्भव ॥ ३ ॥ एव जात्यन्तरात्मकभेदाभेद-विकल्पसिद्ध्या, शबलरूपेऽस्मिन् वस्तुनि, व्यावृत्त्यनुगमावपि स्याद्वाद-नीतित' सिद्धौ, तथा तच्चित्रभावतयाऽनुभवसुस्थितौ व्यावृत्त्यनुगमानुभवसुस्थिताविति निदर्शितमेतत् ॥४॥ इत्थमेव, प्रमाणसिद्धेऽस्मिन् भेदाभेदे, विरोधोद्भावन नृणां । कि करोतीत्याह— **व्यसनं धीजडत्वं**

वा प्रकाशयति केवलं, न किञ्चिदन्यत् ॥ ५ ॥ इत्यलं विस्तरेणेति पूर्वपक्षोपन्यस्तस्य समस्तस्यैव निराकृतत्वात् ॥

॥ इति नित्यानित्यवस्त्वधिकारः समाप्तः ॥



। अर्हम्

# अथ तृतीयः परिच्छेदः ।

यच्चोक्तम्—एतेन सामान्यविशेषरूपमपि प्रतिक्षिप्तमवगन्तव्य-मित्यादि । तदप्ययुक्तम्, सामान्यविशेषरूपस्य वस्तुनोऽनुभवसि-द्धत्वात्, तथाहि—घटादिषु घटो घट इति सामान्याकारा बुद्धि-रुत्पद्यते, मार्तिकस्ताम्रो राजत इति विशेषाकारा च, पटादिर्वा न भवतीति । न चार्थसद्भावोऽर्थसद्भावादेव निश्चीयते, सर्व-सत्त्वानां सर्वज्ञत्वप्रसङ्गात्, सर्वार्थानामेव सद्भावस्याविशेषात् । किं तर्हि? अर्थज्ञानसद्भावात् । ज्ञानं च सामान्यविशेषाकारमेवोपजायत इति । अतोऽनुभवसिद्धत्वात् सामान्यविशेषरूपं वास्त्विति ॥

अधिकारान्तरमधिकृत्याह—यच्चोक्तमित्यादिना । यच्चोक्त पूर्वपक्ष-ग्रन्थे— एतेन सामान्यविशेषरूपमपि प्रतिक्षिप्तमवगन्तव्यमित्यादि । तदप्ययुक्तम् । कुत इत्याह— सामान्यविशेषरूपस्य वस्तुनोऽनुभव-सिद्धत्वात्। एतदेवाह— तथाहीत्यादिना, तथाहि—घटादिषु पदार्थेषु, घटो घट इत्येव सामान्याकारा बुद्धिरुत्पद्यते, तथा मार्तिको मृदादि-निर्वृत्तो मार्तिक , ताम्रविकारस्ताम्र , रजतविकारो राजत', इति विशे-षाकारा च बुद्धिरुत्पद्यते, पटादिर्वा न भवतीत्येवम् । इय च वस्तुतत्त्व-व्यवस्थानिबन्धनमित्यधिकृत्याह— न चेत्यादि । न चाऽर्थसद्भावो-ऽर्थसद्भावादेव कारणात्, निश्चीयते। कुत इत्याह— सर्वसत्त्वानां सर्व-ज्ञत्वप्रसङ्गात्, प्रसङ्गश्च सर्वार्थानामेव भुवनोदरवर्तिनां सद्भावस्याविशे-षात्, किं तर्हि? अर्थज्ञानसद्भावाद् अर्थसद्भावो निश्चीयते। यदि नामैवं, तत किमित्याह— ज्ञानं च सामान्यविशेषाकारमेवोपजायत इति निदर्शितम् । अतोऽनुभवसिद्धत्वात् कारणात्, सामान्यविशेषरूपं वास्त्विति ॥

न चैतद्विज्ञानं भ्रान्तमिति युज्यते, घटादिसन्निधावविकल-तदन्यकारणानां सर्वेषामेवाविशेषेणोपजायमानत्वात् । भ्रान्तमे-तत्, विकल्पकत्वादिति चेत् । अभ्रान्तं तर्हि कीदृग्? इति वाच्यम् ।

निर्विकल्पकमिति चेत्। न, तस्यापि निर्विकल्पकत्वेन भ्रान्ततापत्तेः। अर्थसामर्थ्यजन्यत्वादनापत्तिरिति चेत्। न, अस्य विकल्पकेऽपि तुल्यत्वात्। क्वचिद्व्यभिचारदर्शनादतुल्यत्वमिति चेत्। न, तस्य निर्विकल्पकेऽपि भावात्। न तन्नः प्रमाणं, तदाभासत्वादिति चेत्। विकल्पकेऽपि तुल्यः परिहारः। अर्थधर्मातिरिक्तशब्दभावतोऽस्यार्थसामर्थ्यजन्यत्वानुपपत्तिरिति चेत्। न, बोधनियतार्थतादिभिर्व्यभिचारात्। न ते, अर्थादन्यतोभावादिति चेत्। शब्दोऽपि तद्योग्यद्रव्येभ्यः, इति समानः समाधिः॥

**न चेत्यादि**। न चैतद्विज्ञानमनन्तरोदितं, भ्रान्तमिति युज्यते। कुत इत्याह- **घटादिसन्निधौ** सति, अविकलतदन्यकारणाना संपूर्णालोकादिकारणानामित्यर्थ। सर्वेषामेव 'प्रमातॄणाम्' इति सामर्थ्यगम्यम्,अविशेषेण सामान्येन भिक्षूपासकादीनामपि,उपजायमानत्वात् कारणात्। भ्रान्तमेतदधिकृतज्ञानम्। कुत इत्याह-**विकल्पकत्वादिति चेत्।** एतदाशङ्क्याह-**अभ्रान्तं तर्हि कीदृगिति** एतद् वाच्यम्। **निर्विकल्पकमिति चेत्** अभ्रान्तम्। एतदाशङ्क्याह-**न, तस्यापि** निर्विकल्पकस्य, निर्विकल्पकत्वेन हेतुना, भ्रान्ततापत्तेः, स्वरूपमेव भ्रान्तिनिबन्धनम्, एतच्चास्यापि विद्यत एवेत्यभिप्राय.। अर्थसामर्थ्यजन्यत्वाद् निर्विकल्पकस्य,अनापत्तिरिति चेद् भ्रान्तताया इति प्रक्रम। एतदाशङ्क्याह- **न, अस्य** अर्थसामर्थ्यजन्यत्वस्य, विकल्पकेऽपि तुल्यत्वात्, एतदप्यर्थसामर्थ्यजन्यमेवेत्यर्थः। क्वचिच्छात्रमनोराज्यविकल्पादौ. व्यभिचारदर्शनात् कारणात्, अतुल्यमिति चेद् न ह्यसावर्थसामर्थ्यजन्य इति। एतदाशङ्क्याह- **न, तस्य** क्वचिद्व्यभिचारस्य, निर्विकल्पकेऽपि भावात्। न हि तदपि सर्वमर्थसामर्थ्यजन्यम्। न तत्-अर्थसामर्थ्याजन्यम्, नोऽस्माक, प्रमाणम्, कुत इत्याह-**तदाभासत्वात्** प्रमाणाभासत्वात्, इति चेत्। एतदाशङ्क्याह- **विकल्पकेऽपि तुल्यः परिहारः** अर्थसामर्थ्याजन्य विकल्पकमपि न नः प्रमाण तदाभासत्वादेवेति। अर्थधर्मा-

तिरिक्तश्चासौ शब्दश्चेति विग्रह, तद्भावत कारणात्, अस्य विकल्पकस्य, अर्थसामर्थ्यजन्यत्वानुपपत्तिरसम्भव एवेति चेत्- उक्त च धर्मकीर्तिना- "न ह्यर्थे शब्दा सन्ति तदात्मानो वा, येन तस्मिन् प्रतिभासेरन्"इति। एतदाशङ्क्याह-न,बोधनियतार्थतादिभिः आदिशब्दात् कुशलतादिपरिग्रहः, व्यभिचारात्-अर्थसामर्थ्यजन्यत्वानुपपत्तेरिति।न ते बोधादय ,अर्थादन्यत. समनन्तरादेर्भावादिति चेत्। एतदाशङ्क्याह- शब्दोऽपि तद्योग्यद्रव्येभ्यः शब्दप्रायोग्यद्रव्येभ्योऽन्येभ्य एव, इत्येव, समानस्तुल्य , समाधि परिहार । अनेन च "अयमर्थासंस्पर्शी संवेदनधर्मोऽर्थेषु तन्नियोजनात्"इत्यपि प्रत्युक्तम् ,अनभ्युपगमादिति।।

**न चैतदभ्युपगममात्रम्, तावत्सङ्घातजस्यैव तथार्थग्रहणस्वभावत्वात्, अविगानतस्तथानुभवसिद्धेः, एवमेव व्यवहारदर्शनादिति; तथाहि-एतदिन्द्रियद्वारानुसार्येव विज्ञानमाविष्टाभिलापम् 'अहिरहिः' इति योजकं दर्शकं च धारावाहि तथाव्यवहारबीजं प्रतिप्राण्यनुभवसिद्धमेव । न चेहान्यदेव दर्शनम्,अन्य एव च विकल्पः, विकल्पेनाऽदर्शनात्, दर्शनेन चाविकल्पनात्, तयोरसहवृत्तेरुपादानादिभावात् । इत्येकमेवेदमिति ॥**

**न चेत्यादि** । न चैतत्-शब्दोऽपि तद्योग्यद्रव्येभ्य इति यदुक्तमेतत्, अभ्युपगममात्र, अपि तु सोपपत्तिकमित्याभिप्राय । कुत इत्याह- **तावदित्यादि** । तावत्सघातजस्यैव रूपालोकमनस्कारचक्षु.-शब्दसघातजस्यैव 'विकल्पज्ञानस्य' इति प्रक्रमः, तथा तेन निश्चितप्रकारेणाऽर्थग्रहणस्वभावत्वात् । एतच्चैवमर्थग्रहणस्वभावत्वं, अविगागानतोऽविगानेन, तथा तेन प्रकारेणाऽनुभवसिद्धे , अनुभवसिद्धिश्चैवमेव व्यवहारदर्शनादिति । एतदेव निदर्शनेनाह- **तथाहीत्यादि** । तथाहीत्युपप्रदर्शने, एतद् वक्ष्यमाणम्, इन्द्रियद्वारानुसार्येव तद्व्यापाराऽभावेऽभावात् , विज्ञानम्। किंविशिष्टमित्याह- **आविष्टाभिलापं** प्रविष्टशब्द शब्दसन्मिश्रमित्यर्थः । किंविशिष्टमित्याह- **अहिरहिः** । सर्पः सर्प इत्येवं योजक शब्दस्य, दर्शक चार्थस्येन्द्रियव्यापारेण,

धारावाहि तथासन्तानप्रवृत्तम् । एतदेव विशेष्यते- व्यवहारबीज-मिति । ततस्तथाविधव्यवहारसिद्धेः, प्रतिप्राण्यनुभवसिद्धमेव प्राणिन प्राणिन प्रति तत्तद्द्रष्ट्रपेक्षया प्रतिप्राणि, प्रतिग्रामभिक्षालाभवत्,अनु-भवसिद्धमेव नेह कस्यचिद् विगानमिति । न चेहेत्यादि । न चेह प्रस्तुते ज्ञाने,अन्यदेव दर्शनं निर्विकल्पकं,अन्य एव च विकल्पो निश्चया-त्मकः । कुत इत्याह- विकल्पेनादर्शनात् । कान्तादिविकल्पे तथानु-भवसिद्धमेतत्, दर्शनेन चाविकल्पनात्, अनभिप्रेतभूतृणादिदर्शने एत-दपि सिद्धमेव। तथा, तयोर्दर्शनविकल्पयोः,असहवृत्तेर्युगपदवृत्तेरित्यर्थः । कुत इत्याह- उपादानादिभावात् अवग्रहादिक्रमेणोपादानोपादेय-भावादित्यर्थः । इत्येवम्, एकमेवेदमधिकृत विज्ञानमिति ॥

स्यादेतत्, सविकल्पाविकल्पयोर्विज्ञानयोः स्वभावभेदेऽपि प्रतिभासभेदेन युगपद्वृत्तेर्विमूढः प्रतिपत्ता तमपश्यन्नैक्यं व्यव-स्यति, न तु तथा तत्, अन्यत्रानयोर्यौगपद्येऽपि भेददर्शनात्, अतीताद्यर्थगतविकल्पेनापीन्द्रियज्ञानतो रूपादिग्रहणसिद्धेः । न च स विकल्पो रूपाद्येव गृह्णातीति शक्यं कल्पयितुम्, तस्यातीताद्यर्थाभिधायकत्वत्यागतो वर्तमानार्थयोजनेन प्रवृत्ति-प्राप्तेः । नापि वर्तमानार्थाभिधानसंसर्गी तदाऽपरो विकल्पः समस्ति, द्वयोर्विकल्पयोः सममप्रवृत्तेः, अविगानेन तथानुभवा-भावात् । अतोऽत्र प्रत्युत्पन्नविषयग्रहणकाले दृश्यमानार्थनामा-ऽग्रहः स्पष्ट एव, तन्नामग्रहणसम्भूता च कल्पना, तन्नामग्रहाभावे कल्पनाऽभावः। इति सिद्धमविकल्पकमिन्द्रियज्ञानम्, अतोऽन्य एव च विकल्पः । इति न क्वचिदनयोरैक्यम्, न्यायानुपपत्तेः, भिन्नजातीयत्वादिति । इतश्चैतदेवम् । अन्यथा स्वाभिधानवि-शेषणापेक्षा एवार्था विज्ञानैर्व्यवसीयन्त इति प्राप्तम् ॥

पराभिप्रायमाह- स्यादेतदित्यादिना । स्यादेतदथैवं मन्यसे, सविकल्पाविकल्पयोर्विज्ञानयोः सामान्येन, स्वभावभेदेऽपि सति, प्रतिभासभेदेन हेतुना, युगपद्वृत्तेः कारणात्, विमूढः प्रतिपत्ता पुरु-

ष , तमपश्यन् स्वभावभेदं, ऐक्यं व्यवस्यति तयो. सविकल्पाविकल्पयो', न तु तथा तत् न पुनस्तदैक्यमेव । कुत इत्याह– **अन्यत्र** जातिभेदे, अनयोः सविकल्पाविकल्पयोः, यौगपद्येऽपि सति, भेददर्शनात् । एतदेवाह– **अतीताद्यर्थगतविकल्पेनापि** प्रमात्रा, इन्द्रियज्ञानत इन्द्रियज्ञानेन, रूपादिग्रहणसिद्धे । कस्येत्याह– अन्यस्याश्रुतत्वात् तस्यैव प्रमातुः । **न चेत्यादि** । न च स विकल्पोऽतीताद्यर्थगतः, रूपाद्येव गृह्णाति 'वार्तमानिकम्' इति प्रक्रम , इत्येवं, शक्यं कल्पयितुम् । कुतो न शक्यमित्याह– **तस्येत्यादि** । तस्यातीताद्यर्थगतविकल्पस्य, अतीताद्यभिधायकत्वत्यागतोऽतीतादिवाचकशब्दादित्यागत' । **वर्तमानार्थयोजनेनेति** । वर्तमानोऽर्थोऽभिधेयो यस्य 'अभिधायकस्य' इति प्रक्रमः, स वर्तमानार्थस्तद्योजनेन प्रवृत्तिप्राप्ते कारणात् । **नापीत्यादिना** । नापि वर्तमानार्थाभिधानेन संसृज्यते तच्छीलश्चेति विग्रह', तदा तस्मिन्नेव काले, अपरो विकल्प' समस्ति विद्यते । कुत इत्याह– **द्वयोर्विकल्पयोः समं** युगपत्, अप्रवृत्तेः कारणात् । अप्रवृत्तिश्चाविगानेनाऽविप्रतिपत्त्या, तथा तेन समकालभावेनाऽनुभवाभावात् । **अत इत्यादि** । अतः स्थितमेतत्, प्रत्युत्पन्नविषयग्रहणकाले दृश्यमानार्थनामाऽग्रह' स्पष्ट एव । यदि नामैवं ततः किमित्याह– तन्नामग्रहणेन संभूता तन्नामग्रहणसंभूता, एवंभूता च कल्पना । तत. किमित्याह– **तन्नामग्रहाभावे कल्पनाभाव इति** कृत्वा, सिद्धमविकल्पकमिन्द्रियज्ञानम् । अत इन्द्रियज्ञानात्, अन्य एव च विकल्प इत्येवं, न क्वचित् सजातीयादौ, अनयोर्दर्शनविकल्पयो', ऐक्यमेकभावः , न्यायानुपपत्ते., इयं चोक्तैव । सर्वगर्भं त्वाह– **भिन्नजातीयत्वात्** । सामान्येनैव दर्शनविकल्पयोरिति 'इतश्चैतदेवमङ्गीकर्तव्यम्' इति शेष. । अन्यथैवमनभ्युपगमे, स्वाभिधानविशेषणापेक्षा एवार्था विज्ञानैर्व्यवसीयन्त इति प्राप्तं, व्यवसीयन्ते प्रतीयन्त इत्यर्थ' । कीदृशा इत्याह– **स्वाभिधानेत्यादि** । स्वाभिधानमेव विशेषणं व्यवच्छेदकत्वात् तस्मिन्नपेक्षा येषामर्थानामिति विग्रहः ॥

अस्त्वेवमपि को दोष इति चेत्। निवृत्तेदानीमिन्द्रियज्ञानवार्ता, अभिधानविशेषस्मृतेरयोगात्, सति ह्यर्थदर्शनेऽर्थसन्निधौ दृष्टे शब्दे ततः स्मृतिः स्यात्, अग्निधूमवत्। न चायमशब्दमर्थं पश्यति, अपश्यन् न शब्दविशेषमनुस्मरति, अननुस्मरन्न योजयति, अयोजयन्न प्रत्येति, इत्यायातमान्ध्यमशेषस्य जगतः। अभिपतन्नेवार्थः प्रबोधयत्यान्तरं संस्कारं, तेन स्मृतिः, नार्थदर्शनादिति चेत्। न, तत्संबन्धस्यास्वाभाविकत्वात्, समयादर्शनेऽभावात्, पुरुषेच्छातोऽर्थानां स्वभावापरावृत्तेर्न समयकालोत्पत्तिः, स्वभावस्य परावृत्तौ च तस्य तादात्म्यात्, अन्यस्यासमयदर्शिनोऽपि स्यात्, न हि प्रतिपुरुषमर्थानामात्मभेदः, नैरात्म्यप्रसङ्गात्, आत्मास्थितेरभावात्। तस्मादयमशब्दसंयोजनमेवार्थं पश्यति दर्शनादिति ॥

अस्तु भवत्वेतत्, एवमपि को दोष इति चेत्। एतदाशङ्क्याह– निवृत्तेत्यादि। निवृत्तेदानीमिन्द्रियविज्ञानवार्ता। कस्माद् निवृत्तेत्याह– अभिधानविशेष इत्यादि। अभिधानविशेषो योऽर्थस्तदानीं ग्राह्यस्तस्य यो वाचकः शब्दस्तत्र स्मृतिस्तस्याः स्मृतेरयोगात्। कथमयोग इत्याह– सति ह्यर्थदर्शन इत्यादि। यस्माद् व्यवहारकाले सत्यभिधेयार्थदर्शने तदभिधायिन्यभिधाने स्मरणं भवति। तत्रापि न सर्वस्य शब्दस्येत्याह– अर्थसंनिधौ संकेतकाले, दृष्टे शब्द इति, तत इत्यर्थदर्शनात्, स्मृतिः स्याद् नान्यथा। निदर्शनमाह– अग्निधूमवत्। यथाऽग्निधूमयो. संबन्धज्ञस्याग्निदर्शने धूमे स्मृतिर्भवति, धूमदर्शने चाग्नौ स्मृतिः, तद्वदत्राप्यवसेयम्। स्यान्मतम्-अर्थं तर्हि दृष्ट्वा शब्दं स्मरिष्यतीत्याह। न चायमित्यादि। न खल्वयं सविकल्पकप्रत्यक्षवादी, शब्दरहितमर्थं पश्यति, स्वाभिधानविशेषणापेक्षा एवार्था विज्ञानैर्व्यवसीयन्त इति नियमात्। तत. को दोष इत्याह– अपश्यन् न शब्दविशेषमनुस्मरति 'नियमेन' इति शेष., यस्मादर्थदर्शनं शब्दविशेषस्मृतेर्हेतुः, सा च तेन व्याप्ता, कारणं निवर्तमानं कार्यं निवर्तयति। भवतु

नामैवं ततः को दोष इत्याह- **अननुस्मरन्न योजयति** अत्रापि शब्द-विशेषानुस्मरणं स्मृतियोजनायाः कारणं, तदभावात् कार्याभाव. । अत्रापि को दोष इति चेदाह- **अयोजयन्न प्रत्येति** योजनं ह्यर्थप्रतीते. कारणमित्यत्रापि कारणानुपलब्धिरेवेति । तस्मादायातमान्ध्यमशेषस्य जगतः, न चेष्यते। तस्मान्नेन्द्रियज्ञाने शब्दकल्पना संभवतीति। अथापि स्याद् नार्थदर्शनात् स्मृति', कि तर्हि ?, योग्यदेशावस्थितादेवार्थात् स्मृतिरित्याह- **अभिपतन्नेवेत्यादि** । अभिपतन्नभिमुखीभवन्। कोऽसावित्याह- **अर्थो** रूपादिको विषयः। किं करोति?, **प्रबोधयति** कार्यनिर्वर्तनं प्रत्यनुकूलयति। कं प्रबोधयति ?, **आन्तरं संस्कारं** शब्दस्मृतिवासनाख्य, तेन अर्थाभिपातमात्रेण, सा स्मृतिः, तेन वा कारणेन, स्मृतिः. नार्थदर्शनादिति चेत् , तथा च नान्ध्यं जगतः, विकल्पकत्वं चेन्द्रियज्ञानस्योपपन्नमिति मन्यते। अर्थाभिपातस्य स्मृतिजनकत्वं निराकुर्वन्नाह- **न, तत्संबन्धस्येत्यादि**। यदेतदुक्तम्-अभिपतन्नेवार्थ. प्रबोधयत्यान्तर सस्कारमिति, तन्न। कुत इत्याह-**तत्संबन्धस्य** तयोः शब्दार्थयो. संबन्धस्तत्संबन्धस्तस्य,अस्वाभाविकत्वात् पौरुषेयत्वादित्यर्थः। कथमवसेयामित्याह-**समयादर्शने** सकेतस्याग्रहणे सति,अभावात् स्मृतिसस्कारप्रबोधस्य, अर्थप्रतीतेर्वेति वाक्यशेषः । एतदुक्तं भवति-ययोः स्वाभाविकः संबन्धो न तयोः समयं प्रति काचिदपेक्षा, यथा चक्षूरूपयो', विपर्ययस्त्वत्र, इति नाकृत्रिमत्वं सबन्धस्येति। तत्रैतत् स्यात् समयादुत्तरकाल स्वाभाविकः शब्दार्थसंबन्धो न पूर्वम्, अत' कृतसमयस्याभिपतन्नेवार्थः प्रबोधयत्यान्तर सस्कारमित्याह- **पुरुषेच्छातः** सकाशात्, अर्थानां स्वभावापरावृत्ते' पूर्वस्वभावपरित्यागेन विशिष्टस्वभावान्तरानुत्पत्तेः कारणात् , न समयकालोत्पत्तिः- न समयकाले स्वाभाविकत्वेन शब्दार्थसंबन्धस्य प्रादुर्भाव इत्यर्थः । दोषान्तराभिधित्सयाऽभ्युपगम्यापि स्वभावान्तरपरावृत्तिमाह-**स्वभावस्य परावृत्तौ च** सत्याम् , अन्यस्यासमयदर्शिनोऽपि स्यात् स्मृतिसंस्कारप्रबोध., अर्थप्रतीतिर्वेति शेष , न केवल समयदर्शिन इत्यपिशब्दार्थ. । कस्मादि-

त्याह- तस्य तादात्म्यात्। स स्मृतिसंस्कारप्रबोधकः, अर्थप्रतीतिहेतुको वा आत्मा स्वभावोऽस्येति तदात्मा, तदात्मनो भावस्तादात्म्यं, ब्राह्मणादेराकृतिगणत्वात् ष्यञ्। अथोच्यते- समयदर्शिनं प्रति स्वभावः, न पुनरदृष्टसमयं प्रति, इत्यत आह- न हीत्यादि। न हि पुरुषं पुरुषं प्रति, अर्थानां, आत्मभेदः स्वभावभेदः, भवति। कुत इत्याह- नैरात्म्यप्रसङ्गात्। अयमभिप्रायः- पुरुषेच्छानामानन्त्यात्, तदनुवर्तिनश्च यद्यर्थाः स्युस्तदा तेषां नैःस्वभाव्यमेव स्यात्, एकस्यानेकस्वभावाभावात्। स्याद् मतम्- भवतु सामयिकस्वभावस्याभावः, अन्योऽपि तद्व्यतिरिक्तो वस्तुसत्स्वभावोऽस्यास्त्येव, अतो नैरात्म्यप्रसङ्गो न भविष्यतीत्याह- आत्मस्थितेरभावादिति। उपलब्धिलक्षणप्राप्तस्य तद्व्यतिरेकेणान्यस्य स्वभावस्यानुपलम्भादित्यभिप्रायः। अथवा नन्वेवं सति बहुतरस्वभावसिद्धिरेव, तत्किमुच्यते- नैरात्म्यप्रसङ्गात्?, इत्याह- आत्मस्थितेरभावात्। पुरुषाणां स्वाभिप्रायवशेनैकत्र विरुद्धस्याऽपि स्वभावस्याऽभ्युपगमसंभवात्, न चैकस्य विरुद्धानेकस्वभावो युक्त इति मन्यते। तदेवं स्मृत्यसंभवेन निर्विकल्पतां प्रतिपाद्योपसहरन्नाह- तस्मादित्यादि। यस्मादेवमनन्तरोक्तेन प्रकारेण शब्दविशेषस्मृतिर्न संभवति, तस्मादयं प्रतिपत्ता, अशब्दसंयोजनमेवार्थं पश्यति, अविद्यमानं शब्दसंयोजनं यस्यार्थस्येति विग्रहः। कुत इत्याह- दर्शनात्। अयमस्यार्थो यस्मादयं प्रतिपत्ताऽर्थमुपलभते, तस्मादशब्दसंयोजनमेवार्थं पश्यतीति निश्चीयते।

किञ्च, विकल्पात्मकत्वेऽस्य निश्चयात्मकमिदमित्यनेकप्रमाणवादहानिः, तेनैव वस्तुनो निश्चयात्, नित्यत्वादौ भ्रान्त्यनुपपत्तेः। अनेकधर्मके वस्तुन्यन्यतरधर्मनिश्चयात् तदन्यनिश्चयाय प्रमाणान्तरसाफल्यमिति चेत्। न, एकधर्मविशिष्टस्यापि निश्चये सर्वधर्मवत्तया निश्चयात्, प्रमाणान्तरस्य निश्चितमेव विषयीकुर्वतः स्मृतिरूपानतिक्रमात्, एकधर्मद्वारेणापि तद्वतो निश्चयात्मना प्रत्यक्षेण विषयीकरणे सकलधर्मोपकारकशक्त्यभिन्नात्मनो निश्चयात्। न ह्यन्य एवान्योपकारको नाम। ततो यदेवा-

**स्यैकोपकारकत्वेन निश्चयनम्, तदेव तदन्योपकारकत्वेनापि । न चासत्युपकार्योपकारकभावे तद्व्यवस्थाऽतिप्रसङ्गतो युक्ता ॥**

**किञ्चेत्यादि** । किञ्चायमपरो दोषः— विकल्पात्मकत्वेऽस्य प्रत्यक्षस्य, निश्चयात्मकमिदमित्येवं विकल्पात्मकत्वेन हेतुना । यदि नामैवं ततः किमित्याह— **अनेकप्रमाणवादहानिः** प्रत्यक्षानुमानागमप्रमाणवादहानिः । कुत इत्याह— **तेनैव** निश्चयात्मना प्रत्यक्षेण, वस्तुनो निश्चयात् कारणात् । यथोक्तनिश्चयेऽपि किमित्याह— **नित्यत्वादौ** धर्मे, भ्रान्त्यनुपपत्तेरिति । पराभिप्रायमाह— **अनेकधर्मके वस्तुनि** नित्यत्वादिधर्मापेक्षया, अन्यतरधर्मनिश्चयाद् यथोचितप्रत्यक्षेण, तदन्यनिश्चयाय धर्मान्तरनिश्चयार्थं, प्रमाणान्तरसाफल्यमनुमानादिसाफल्यमिति चेत् । एतदाशङ्क्याह— **नैकेत्यादि** । न नैतदेवम् । कुत इत्याह—**एकधर्मविशिष्टस्यापि** 'वस्तुनः' इति प्रक्रम. । निश्चये सति किमित्याह—सर्वे च ते धर्माश्च सर्वधर्मास्तेऽस्य वस्तुनो विद्यन्त इति सर्वधर्मवत् तद्भावः सर्वधर्मवत्ता तया, निश्चयात् । एव च **प्रमाणेत्यादि** । प्रमाणान्तरस्याऽनुमानादे , निश्चितमेव 'धर्मान्तरम्' इति प्रक्रम', विषयीकुर्वतः सत', स्मृतिरूपानतिक्रमात्, 'अनेकप्रमाणवादहानि.' इति वर्तते, एकधर्मविशिष्टस्यापि निश्चये सर्वधर्मवत्तया निश्चयादिति यदुक्तं तदुपदर्शयन्नाह— **एकधर्मेत्यादि** । एकधर्मद्वारेणापि तद्वतो धर्मवतो वस्तुन , निश्चयात्मना प्रत्यक्षेण सविकल्पकेन, विषयीकरणे सति । किमित्याह— सकलाश्च ते धर्माश्च तेषामुपकारिकाश्च ताः शक्तयश्चेति विग्रह', ताभ्योऽभिन्नश्चासावात्मा चेति समासस्तस्य, निश्चयात् कारणात्, सर्वधर्मवत्तया निश्चयः । एतत्समर्थनायैवाह— **न हीत्यादि** । न यस्मात्, अन्य एव 'धर्मी वस्त्वात्मा' इति प्रक्रम., अन्योपकारको नाम धर्मान्तरोपकारको नाम, किं तर्हि ?, स एव, धर्मिण एकत्वादिति हृदयम् । ततो यदेवाऽस्य वस्तुनो धर्मिणः, एकोपकारकत्वेनान्यतरधर्मापेक्षया, निश्चयनं तदेवान्योपकारकत्वेन धर्मान्तरोपकारकत्वेनापि, निश्चयनम्, अन्यथा तदेकत्वहानिरिति गर्भ. । न चासत्युपकार्योपकारकभावे तद्व्यवस्था वस्तुनो धर्मधर्मि-

व्यवस्था, अतिप्रसङ्गतः कारणात्, युक्ता। अतिप्रसङ्गश्च तद्वद् धर्मान्तराद्यपेक्षयापि धर्म्यादिभावप्रसङ्ग, निमित्ताभावाविशेषादिति ॥

न चोपकारिकाः शक्तयस्ततो भेदमनुभवन्ति, असत्युपकारेऽस्येमाः शक्तय इति संबन्धायोगात्, आधाराधेयभावस्यापि तन्निबन्धनत्वात्, अन्यथा कल्पनामात्रं स्यात्, तथा च शक्तीनामनवस्था। ततः स्वात्मैवाऽस्याशेषधर्मोपकारिकाः शक्तयः, तस्य सर्वधर्मोपकारकत्वेन निश्चये तदुपकार्या अपि धर्मा निश्चिता एव, तन्निश्चयनान्तरीयकत्वादुपकारकानिश्चयस्य, न हि ये यदपेक्षस्थितयस्ते तदनिश्चये तथा निश्चीयन्ते, स्वस्वामित्ववदिति। एवमपि सविकल्पकप्रत्यक्षानुपपत्तिरिति ॥

न चेत्यादि। न चोपकारिकाः शक्तय उपकारकसम्बन्धिन्यः, तत उपकारकाद् धर्मिणः, भेदमनुभवन्ति। कुत इत्याह- असत्युपकारे उपकारकसंबन्धिनि, अस्योपकारकस्य धर्मिण., इमाः शक्तयः, इत्येवं, संबन्धाऽयोगात्, अयोगश्च निमित्ताभावेन। आधाराधेयभावः संबन्धो भविष्यतीत्याशङ्कापोहायाह- आधाराधेयभावस्यापि कुण्डबदराद्युदाहरणादिसिद्धस्य, तन्निबन्धनत्वाद् उपकारनिबन्धनत्वात्, तथाहि-पतनधर्मणां बदराणामपतनस्वभावाधानेनोपकारक कुण्डं बदराणामिति भावनीयम्। इत्थ चैतदङ्गीकर्तव्यमित्याह- अन्यथेत्यादि। अन्यथैवमनभ्युपगमे, कल्पनामात्र स्याद् आधाराधेयभाव.। न चैतदेवमित्युपकारसिद्धि.। तथाचेत्यादि। तथाचैव चोपकारसिद्धौ सत्यां, शक्तीनामनवस्था- यकाभि. शक्तिभिः शक्तीनामुपकरोति ता अपि ततो भिन्ना इति तत्राप्ययमेव वृत्तान्त इत्यनवस्था। ततस्तस्मात्, स्वात्मैवास्योपकारकस्य धर्मिणः, अशेषधर्मोपकारिका शक्तय इति। यतश्चैवम्, अतस्तस्योपकारकस्य धर्मिण, सर्वधर्मोपकारकत्वेन निश्चये सति। किमित्याह- तदुपकार्या अपि विवक्षितोपकारकोपकार्या अपि, धर्मा निश्चिता एव। कुत इत्याह- तन्निश्चयनान्तरीयकत्वात् उपकार्यधर्मानिश्चयनान्तरीयकत्वात्, उपकारकनिश्चयस्य तदपेक्षमस्योपकारकत्वमि-

त्यर्थः । एतत्स्पष्टनायैवाह- न हीत्यादि । न यस्मात्, ये भावाः यदपेक्षस्थितय· प्रकृत्या ते भावाः,तदनिश्चयेऽपेक्षाऽनिश्चये,तथा निश्चीयन्ते तदपेक्षकत्वेन निश्चीयन्ते नहि । निदर्शनमाह-स्वस्वामित्ववत्। स्वं च स्वामी च स्वस्वामिनौ तद्भाव· स्वस्वामित्वं तद्वत् 'स्वमस्य, अस्य स्वामी' इतीतरेतरप्रतिपत्तिनान्तरीयकी स्वस्वामिप्रतिपत्तिः। उपसंहरन्नाह-एवमपि अनेकप्रमाणवादहानितोऽपि, सविकल्पकप्रत्यक्षानुपपात्तिरिति ॥

अत्रोच्यते- यदुक्तम्- सविकल्पा-विकल्पयोर्विज्ञानयोः स्वभावभेदेऽपि प्रतिभासभेदेन युगपद्वृत्तेरित्यादि । तदयुक्तम्, एकविषययोः सविकल्पाविकल्पयोर्युगपद्वृत्त्यसिद्धेः, तदविकल्पपूर्वकत्वात् तद्विकल्पस्य, अन्यथाऽस्याहेतुकत्वापत्तिः, तथा च सदा सदसत्त्वप्रसङ्गः । सोऽपि तत्पूर्वक एवेति चेत् । कथमनयोर्युगपद्वृत्तिः?। प्रबन्धापेक्षयेति चेत् । कथमाद्याविकल्पादुभयजन्म ?। तत्तत्स्वभावत्वादिति चेत् । कथं कारणभेदो भेदहेतुः? । यदि न, ततः को दोष इति चेत् । प्रधानादीनामनिषेधप्रसङ्गः । ते तथाभावजनका इति चेत् । ततः को दोष इति वाच्यम् । नैकस्मादनेकजन्म इति चेत् । कथं न ? । तत्तत्स्वभावत्वेन संक्रान्त्या तदयुक्तेरिति चेत् । तदभावे तद्युक्तिरित्यद्भुतम् । ततोऽसद्भावादनद्भुतमिति चेत् । तत्तथाभावतोऽभवदसद् भवति, इत्यद्भुतमेव, इति परिभाव्यतामेतत् ॥

एतदाशङ्क्याह- अत्रोच्यते- यदुक्तम्- सविकल्पाविकल्पयोर्ज्ञानयोः स्वभावभेदेपि प्रतिभासभेदेन युगपद्वृत्तेरित्यादि पूर्वपक्षे। तदयुक्तम्। कुत इत्याह- एकविषययोः सविकल्पाविकल्पयोः। किमित्याह- युगपद्वृत्त्यसिद्धेः। असिद्धिश्च तदविकल्पपूर्वकत्वाद् विवक्षितैकविषयाविकल्पपूर्वकत्वात्, तद्विकल्पस्य सामान्येन विवक्षितैकविषयविकल्पस्य। अन्यथा अतत्पूर्वकत्वे, अस्य विकल्पस्य, अहेतुकत्वापत्तिस्तदपरहेत्वयोगात्। तथा च सदा सर्वकालं, सदसत्त्वप्रसङ्गोऽधिकृतविकल्पस्य,"नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात्" इति वचनात्। सो-

ऽप्यधिकृतविकल्प',तत्पूर्वक एव विवक्षितैकविषयाविकल्पपूर्वक एव,इति चेत्। एतदाशङ्क्याह- **कथमनयोः** अविकल्पाविकल्पयोः,युगपद्वृत्ति'। प्रबन्धापेक्षयेति चेद् युगपद्वृत्तिः। एतदाशङ्क्याह- **कथमित्यादि**। कथ केन प्रकारेण, आद्यं च तदविकल्प चेति विग्रहस्तस्मात्, उभयजन्म सविकल्पाविकल्पजन्म। **तत्तदित्यादि**। तस्याद्याविकल्पस्य, तत्स्वभावत्वात् सविकल्पाविकल्पजननस्वभावत्वादुभयजन्म, इति चेत्। एतदाशङ्क्याह- **कथं कारणभेदो भेदहेतुः** कार्याणामिति शेष., नैव, तदभावेऽपि तद्भेदासिद्धेरित्यभिप्रायः। यदि न कारणभेदो भेदहेतु', ततः को दोष इति चेत्। एतदाशङ्क्याह- **प्रधानादीनाम्**। आदिशब्दात् परमपुरुषग्रह ,अनिषेधप्रसङ्गो दोष ,ते प्रधानादयः, तथाभावजनकास्तथाभावेन तत्तथाभवनलक्षणेन जनका महद्भादेरिति चेत्। एतदाशङ्क्याह- **ततः को दोष इति वाच्यम्**। नैकस्मादनेकजन्म तत्तद्भावेन दोष इति चेत्। एतदाशङ्क्याह- **कथं न एकस्मादनेकजन्म ?**। तत्तत्स्वभावत्वेन तस्य प्रधानादेस्तत्स्वभावत्वेन, तथाभावतोऽनेकजन्मस्वभावत्वेनेत्यर्थ., संक्रान्त्या हेतुभूतया, तत्तद्भावेन तदयुक्तेस्तत्तत्स्वभावत्वायुक्तेर्नैकस्मादनेकजन्मेति चेत्। एतदाशङ्क्याह- **तदभावे** संक्रान्त्यभावे, तदेकान्तनिवृत्त्या तद्युक्तिस्तत्तत्स्वभावत्वयुक्तिः, इत्यद्भुतमाश्चर्यमेतत्। तत' कारणात्, असद्भावादसतो भावेन, अनद्भुतमनाश्चर्यमिति चेत्। एतदाशङ्क्याह- **तत्तथाभावतः** तस्य कारणस्य तथाभावेन कार्यभावेन, अभवदेकस्मादनेकमसद् भवति तुच्छातुच्छप्रतिपत्त्या, इत्यद्भुतमेवेति परिभाव्यतामेतत्, न ह्यसत् सद् भवति, अतिप्रसङ्गादित्यभिप्रायः॥

**न चानयोः स्वभावभेद एव, तत्त्वत एकविषयत्वात्, विकल्पस्यापि पारम्पर्येण तद्वस्त्वालम्बनत्वात्, तदुत्थज्ञानोपादानत्वात्, तत्स्वभावानुकारातिरेकेण तदुपादानत्वायोगात्। न च तदतीतमित्यनालम्बनम्, अविकल्पस्यालम्बनत्वात्। न च तद्भावकाले तद्भावः, तदसदुदयाभ्युपगमात्। न चैवमपि न तदतीतता, तदा तदसत्त्वेन तदुपपत्तेः। न च तदाकारतादिना भेदः, द्वयोरपि**

मालोक्य बाणान् त्यक्त्वा भूमिलुठनैर्यावत्पादयोरपतत्, तावद्धनञ्जयेन बाहुभ्यां धृत्वा स्नेहादालिङ्गितश्चित्राङ्गदः। ततश्चित्राङ्गदो धनञ्जयं विष्टरे निवेश्य स्वयं भूमौ निविष्टः। अथ धनञ्जयः पृच्छति स्म– भोश्चित्राङ्गद ! त्वं किमत्र समागतः ?, तव दुर्योधनेन सह किं विरोधकारणम् ?। चित्राङ्गद उवाच–विद्यां शिक्षयित्वा त्वया विसृष्टोऽहं स्वां पुरीं प्रतस्थे, मार्गे मम नारदो मिलितः। अहं तस्य पादे पतितः। तेनाशीर्दत्त्वोचे–भोश्चित्राङ्गद ! त्वं कथं चिराद् दृष्टोऽसि?, मम मनस्तव मिलनाय भृशमुत्कण्ठते। भो मुनीन्द्र ! अहमिन्द्रकीलपर्वते आदिदेवनमस्याऽर्थं गतोऽस्मि, तत्र किरातार्जुनयोर्बलमाकर्ण्य तं द्रष्टुं रथनूपुरं यातोऽस्मि; तस्मिन् अर्जुने दृष्टेऽह निजान् बन्धून् व्यस्मार्षम्, तस्य समीपेऽहं शस्त्राभ्यासमकार्षम्। एवमन्येऽपि खेचरा इन्द्रतनयादयः शतसंख्याः तस्यार्जुनस्य शिष्यतां प्रययुः। तस्य धनञ्जयस्य निखिलेषु शिष्येषु अहमेव प्रियोऽस्मि। तेन धनञ्जयेन स्तोकैरेव दिनैस्ते सर्वेऽपि शस्त्रशास्त्रपारीणाः कृताः। ततो धनञ्जय इन्द्रं समनुज्ञाप्य स्वबन्धूनां मिलनाय गतः। अहमपि तद्विसृष्टश्चिरकालेन निजां पुरीं यामि, भो,अर्जुन !, इति नारदाग्रे मया उक्तम् । पुनर्मां नारदोऽवादीत्–भोश्चित्राङ्गद ! त्वद्गुरुं बन्धुभिः सार्द्धं हन्तुं दुर्योधनः ससैन्यः समुपैति, यदि त्वं पश्चाद् गुरोः शोकं विधास्यसि तर्हि सांप्रतं तत्प्रतीकारोऽधुनैव चिन्त्यताम्। एवं यावदहं नारदेन समं वार्तां करोमि, तावद् ममोद्यानपालकः खेचर आगत्य क्रोधाग्नौ समिधं कथां कथयामास।

यथा–

"अस्ति क्रीडावनं देव ! यत्ते द्वैतवनान्तिके।
तदेत्योपाद्रवद् दूरं विरोधीव सुयोधनः" ॥ १ ॥

तव प्रियाभिर्येषां पादपानां पल्लवा न लूनास्ते वृक्षसमूहाः खण्डशः कृत्वा त्याजिताः, यद्वनं त्वया सेचं सेचं शश्वल्ला-

लितमपत्यवत्, तद्वनमनेन दुर्योधनेन कदलीवनमिव लूनम्। अथ तस्मिन् वने मरकतस्तम्भं स्फटिकोपलनिर्मितं यत्तव सौधं, तदप्यनेन आरक्षकान् हत्वा अध्यास्तम्, देवैर्दुष्प्रापं यत्तव सौधं तदप्यनेन भुक्तं धूलिधूसरं विहितम्, इति वनरक्षकस्य नारदस्य च वाचं श्रुत्वा क्रोधारुणलोचनोऽहं सपरिकरो दुर्योधनं हन्तुमुत्सुकोऽधाविषम्। प्रथममनेन दुर्योधनेन युधिष्ठिरोपरि दुर्मनायितम्—एकोऽयमपराधः, तथाऽनेन दुर्योधनेन मम क्रीडावनं विनाशितम्—द्वितीयोऽयमपराधः; अतो मया दुर्योधनो योद्धाऽहमिति मन्यमानो निगडे बद्धो गले शृङ्खलैर्बद्धः सबान्धवः, अतोऽहमेनं न मुञ्चामि। एतत् सर्वं समीपस्थेन दुर्योधनेन सर्वं निजचरित्रं कर्णाभ्यां श्रुतम्। भीतो दुर्योधनः—नूनमेष विद्याधरश्चित्राङ्गदो मां सबान्धवं हनिष्यति। तावद्धनञ्जयश्चित्राङ्गदं प्राह—भोश्चित्राङ्गद! दुर्योधनं मुञ्च, यतो मम बान्धवेन युधिष्ठिरेण दुर्योधनकार्येऽहं प्रेषितोऽस्मि; अत एनं मुञ्च, यतो महात्मानो नतवत्सला भवन्ति। अस्य पत्न्या भानुमत्या मम बान्धवो भर्तृभिक्षां याचितः, तेन त्वमेनं मुञ्च, तत एतां गिरं श्रुत्वा दुर्योधनोऽचिन्तयत्—हा! धिग् वेधसं, पुनः पुनः क्षतोपरि यः क्षारं क्षिपति; यद्धनञ्जयो वारं वारं एवं वक्ति, एष विद्याधरो यदि मां हिनस्ति तद्वरं, परं युधिष्ठिराद् यद् मोक्षणं तन्मम भृशं त्रपाकारि। ततश्चित्राङ्गदोऽवोचत्—हे धनञ्जय! युधिष्ठिरोक्तमहं करिष्यामि, यतस्ते मम गुरवः, तेषां वचः शिरोमाल्यवद् मनोरममित्युक्त्वा चित्राङ्गदो बन्धनाद् दुर्योधनं सबान्धवं मुमोच। ततः सर्वेऽपि धनञ्जयचित्राङ्गददुर्योधनादय एकं विमानं समारुह्य परस्परं क्रीडां कुर्वाणाः सर्वेऽपि विद्याधरा द्वैतवने युधिष्ठिरान्तिकमुपागमन्। ततस्ते युधिष्ठिराद्या बान्धवाउन्मुखा विद्याधरविमानैरावृतमर्जुनं लब्धजयं दृष्ट्वा सर्वेऽपि मुदमापुः। भानुमत्यपि प्रियं दुर्योधनं दृष्ट्वा भृशं मुदमाप। अथ

ते सर्वेऽपि विमानतः समुत्तीर्य युधिष्ठिरं नेमुः, गलितकुशीलत-इव दुर्योधनः तथैवाऽस्थात् साभिमानत्वात् ।

यतः–

"विषभारसहस्रेण वासुकिर्नैव गर्जति ।
वृश्चिकस्तृणमात्रेणाप्यूर्ध्वं वहति कण्टकम् " ॥ १ ॥
त्यागिना किं दरिद्रेण किं कुलीनेन पापिना ?।
तुष्टेन किं कदर्येण दर्पान्धेन बुधेन किम् ? ॥ २ ॥
सा विद्या या मदं हन्ति सा श्रीर्याऽर्थिषु दीयते ।
धर्मानुसारिणी या च सा बुद्धिरभिधीयते " ॥ ३ ॥

एवंविधो मानपर्वतो दुर्योधन उत्पाट्य खेचरैर्युधिष्ठिरान्तिकं नीतः । तदा कुन्ती वेगादागत्य नीवाराक्षतैस्तं दुर्योधनमवर्धयत् । दुर्योधनो मत्सरात् अनमन्नपि युधिष्ठिरेण राज्ञा बाहुभ्यां धृत्वा वेगादाश्लिष्यत । सतां स्वभावोऽयम् ।

यतः–

"सुजनो न याति विकृतिं परहितनिरतो विनाशकालेऽपि ।
छेदेऽपि चन्दनतरुः सुरभयति मुखं कुठारस्य ॥ १ ॥
दुर्जनवचनाङ्गारैर्दग्धोऽपि न विप्रियं वदत्यार्यः ।
न हि दह्यमानोऽप्यगुरुः स्वभावगन्धं परित्यजति ॥ २ ॥
हिताय नाऽहिताय स्यात् महान् संतापितोऽपि हि ।
पश्य रोगापहाराय भवेदुष्णीकृतं पयः " ॥ ३ ॥

इत्यादिस्वजनस्वभावाद् दुर्योधनो दुष्टोऽपि राज्ञा युधिष्ठिरेण संभाषितः । सुजना ईदृशा एव भवन्ति । दुर्योधनमजल्पन्तं दृष्ट्वा युधिष्ठिर उवाच– हे वत्स ! त्वमुद्विग्न इव किं दृश्यसे ?, तेजस्विनोऽपि किं दुर्दशां नो यान्ति ?, यथा राहुग्रहे सूर्याचन्द्रमसौ किं न पततः ?। हे वत्स दुर्योधन ! त्वं स्वस्थानं याहि, प्रजा अनाथाः संप्रति बाढं सीदन्ति, एवं बहुधा संभाष्य पुष्पफलादिभिर्भृशं सत्कृत्य सुयोधनं विससर्ज । सोऽपि कृष्ण-

मुखः तूष्णींकृत्य लज्जयाऽधोमुखौ भुवं विविक्षुरिव अधोमुख-स्तस्थौ। अथ ते विद्याधराः चित्राङ्गदचन्द्रशेखरादयो युधिष्ठि-राज्ञया अर्जुनं प्रशंसन्तः स्वं स्वं स्थानं संजग्मुः। दुर्योधनो-ऽपि युधिष्ठिरेण विसृष्टः स्वसैन्यपरिवृतः स्वस्थानमगमत्। अथ ते दुर्योधनसैनिका दुर्योधनपराक्रमं निन्दन्तो धनञ्जयपराक्रमं प्रशंसन्तो हस्तिनापुरमगुः। तेषां पाण्डवानां सुखेन द्वैतवनं तस्थुषामेकस्मिन् दिने युधिष्ठिरस्य व्योम्नि प्रसृमरं रजो दृष्टि-पथं ययौ। ततस्तैः पाण्डवैः सायुधपादातिकव्रजसंकुलं सहा-स्तिकमश्वव्रातपरिमण्डितमेकं सैन्यं समापतदद्दृश्यत। तत्सै-न्यात् कुन्तीजामाता जयद्रथो दुःशल्यायाः पतिः समागत्य कुन्तीमानमत्। कुन्त्या आनन्दाशीर्भिरभिनन्दितः कियन्तं कालं पाण्डवैर्मुदा तत्र स्थापितः। धनञ्जयो मातुर्निदेशात् प्रत्यहं जयद्रथं दिव्यया रसवत्या भोजयामास। एकस्मिन् दिने जयद्रथो धनञ्जयेन पृष्टः—त्वं किमर्थमत्रागाः?। तेनोक्तम्—अहं परिणेतुं गतो वलमानोऽस्मिन् वने भवन्तं ज्ञात्वा मिलनाय समागतोऽस्मि। तत् श्रुत्वा मुदितोऽर्जुनस्तं भृशं मेने। तैः सह एकीभूय क्रीडावनेषु क्रीडति स्म। एवं बहूनि दिनानि गमयित्वा एकस्मिन् दिने पाण्डवेषु वनक्रीडां गतेषु जयद्रथः पाञ्चालीं रथे समारोप्य शीघ्रं जहार, जानकीं रावण इव। अहो! पापिनः पाप-संख्या नास्तिः; यथा—मेघस्य धारासंख्या नास्ति, दिवि तारा-संख्या नास्ति, समुद्रे मत्स्यसंख्या नास्ति, मेरौ सुवर्णसं०, मा-तरि स्नेहसं०, सर्वज्ञे गुणसं०, आकाशे प्रदेशसं०, जीवस्य गतभ-वसं०, सत्पात्रदाने पुण्यसं०, तथा दुर्जने दोषसंख्या नास्ति। सु-तरां पोषितोऽपि दन्दशूकः सज्जनं दशत्येव। सा द्रौपदी जयद्रथेन ह्रियमाणा पञ्चानामपि भर्तॄणां नाम गृह्णती उच्चैश्चक्रन्द। ततस्ते पाण्डवाः प्रेयस्या दुःश्रवं रोदनं शुश्रुवुः। अभ्यर्णवर्तिनौ भी-माऽर्जुनौ क्रोधारुणावधावताम्। तौ धावन्तौ भीमाऽर्जुनौ दृष्ट्वा

कुन्ती बभाषे—भो वत्सौ ! जयद्रथस्य जीवितं रक्षताम् । दुःशल्या भवद्भगिनी विधवा मा स्म भवेत्—दुःशल्या विधवा न भवति तथा कार्यम् । सिंहादिव शशकः पलायमानो जयद्रथो भीमार्जुनाभ्यां तर्जितः—क्व यासि रे दुरात्मन् !!, यदि पौरुषं भवति तर्हि सज्जो भव; यदि पौरुषं नास्ति तर्हि द्रौपदीं त्यक्त्वा स्वस्थानं याहि । एवं भीमाऽर्जुनाभ्यां तर्जितो जयद्रथः संवर्मितचमू रौद्रो रणायाऽभिमुखोऽभवत् । भीमपराक्रमो भीमो दोर्वीर्यमदर्शयत् ।

यथा—

"भीमसेनो गदास्तम्भं दम्भोलिमिव दोलयन् ।
दन्तिनः पातयामास सर्वतः पर्वतानिव" ॥ १ ॥

भीमार्जुनाभ्यामेवं विलोडिते सैन्येऽर्जुनेन जयद्रथ एकाक्येव स्वोत्तरीयेण दस्युबन्धं बबन्ध । अथ भीमस्तूर्णं किरीटिनः तूणाद् भल्लीं समादाय तस्य शिरः पञ्चशिखममुण्डयत् । द्रौपदीं बाहौ धृत्वाऽग्रे कृत्वा एवमवोचत्— हे प्रिये ! एष जयद्रथस्तव चौरो मातृवचनाद् मया जीवन् मुक्तः; एवं विडम्बितो जयद्रथो भीमेन मातृपुरो नीतः । सोऽपि क्रोधारुणाक्षो भीममुवाच—भो वृकोदर ! रे पीनोदर ! रे शौण्डीरतागर्वपर्वत ! रे निर्विवेक ! ममैकं वचो निशम्यताम् ।

यथा—

" पञ्चानामपि युष्माकं नियतं मृत्युहेतवः ।
पञ्चाप्येते शिखा बद्धा ज्ञायन्तां धूमकेतवः " ॥ १ ॥

तस्यैतद्वचनमनाकर्ण्यैव निर्भयावागत्य भीमार्जुनौ ज्येष्ठबन्धोर्मिलितौ । विसर्जितो जयद्रथः । ततस्ते पाण्डवा जयद्रथचरित्रं दृष्ट्वा परस्परं हास्यं कुर्वाणाः सुखेन दिनानि गमयन्तो विहरन्ति स्म । अन्यदा तत्र वने पाण्डवसमीपे नारदर्षिः समा-

गतः । तैः पाण्डवैर्मुनिः संमानाऽऽसनदानपूर्वकं विज्ञप्तः–हे मुने ! त्वं केन कारणेनाऽत्र वने समागतः ? । पाण्डवैः पृष्टः प्रमुदितो नारदो मुनिरब्रवीत्–भोः पाण्डवाः ! दुर्योधनो दुरात्मा भवता विसृष्टोऽर्द्धमार्गे गतो निगडघर्षितपादान् स्वान् बन्धून् दृष्ट्वा कर्णदुःशासनादिबन्धून् समाकार्य एवमभाषत । अहो ! एते पाण्डवा मम शत्रवः केन प्रकारेण हन्यन्ते? । तदा कर्ण उवाच–हे राजेन्द्र ! अनेन पाण्डवेन त्वं चित्राङ्गदविद्याधराद् मोचितोऽसि, अथास्माकं किञ्चिद् न्यूनं नास्ति, तस्मादेभिः पाण्डवैः सह विरोधं मा कार्षीः । धृतराष्ट्रोऽप्येवमभाषिष्ट–भोः पुत्र दुर्योधन ! अनेन विरोधिनाऽपि युधिष्ठिरेण त्वं चित्राङ्गदग्रहाद् मोचितः पार्थेन; एषा हि सुकृतचूलिका । प्रायः सुजना एवंविधाः स्युः । त्वं दुर्जनो मा भूयाः, विरोधं मुञ्च, स्नेहं भजस्व, एहि हस्तिनापुरम् । अथ कर्ण उवाच– हे देव ! हृदये खेदं मा उद्वह, संग्रामे बहुशः शूराः जीयन्ते च, परैरभिभूयन्ते च । तथा त्वया बन्धुभ्यो मोक्षो न स्मरणीयः, यतो विपदः स्मर्यमाणाः पदे पदे दुःखं कुर्युः, इति कर्णे वदत्येव शिबिरपार्थिवाः सर्वे सम्भूय सुयोधनं संबोध्य हस्तिनापुरं निन्युः । तत्र नगरे गतोऽपि व्रीडया वाटिकाक्रीडाशैलादिषु न चिक्रीड, किन्तु अधोमुखः शयनीये बहून् दिवसान् निनाय । एकस्मिन् दिने सचिवैर्जागरितोत्साहो हस्तिनापुरवीथिषु एवं पटहं दापयामास ।

यथा ।

"यः कश्चिदस्त्रैः शस्त्रैश्च मन्त्रैस्तन्त्रैश्च शक्तिमान् ।
निहन्ति सप्तरात्रेण पाण्डवान् परिपन्थिनः ॥ १ ॥
तुष्टो दुर्योधनस्तस्मै स्तम्बेरममनोरमम् ।
विश्राणयति राज्यार्द्धमिति सोऽस्मिन्नघोषयत्" ॥२॥

एतद् डिण्डिमं श्रुत्वा पुरोचनपुरोधसः सोदरः सुरोचनो नाम्ना क्रूरात्मा लाक्षागृहदग्धभ्रातृवैरं स्मरन् डिण्डिमं वारया-

मास । ततः सुरोचनपाटहिकैर्दुर्योधनसंनिधौ नीतः । ततः स-
उद्धतः स्वशक्तिव्यतिकरं कथयामास– भो राजेन्द्र ! मया पूर्वं
कृत्या राक्षसी आराधिताऽस्ति, सा ममोक्त्या षट्खण्डपृथ्वीमण्डलं
ग्रसेत, तस्याः पुरतः केऽमी वराकाः पाण्डवाः ?। भो दुर्योधन !
इतः सप्तमे दिने तवाभीष्टं सर्वं करिष्ये । यतोऽमी पाण्डवाः
पुरोचनवधाद् ममापि वैरिणः । एवं सुरोचनवाचं निशम्य
दुर्योधनो मुदमाप, तं प्रसादपात्रं विदधे। अथ स सुरोचनो
राज्ञः प्रसादमासाद्य गृहे गत्वा तेन तेनोपचारेण जपहोमा-
दिकर्मभिश्च कृत्यां राक्षसीमारराध। अहमेतत्स्वरूपं भीमं युष्मा-
कं कथनाय समागतोऽस्मि । सुरोचनो दुष्टविद्यासिद्धो विप्रोऽ-
तिक्रूरमनाः क्षुद्रेषु कर्मसु कृत्यां प्रवर्त्तयन् प्राणसंदेहकृद्
भविष्यति, इत्युक्त्वा मुनौ स्वस्थानं गते भीमो बभाषे–भो
बान्धवाः ! एषोऽहं गदामादाय कृत्याऽभिमुखं गत्वाऽनया
गदया तां क्षुद्रां कृत्याराक्षसीं चूरतिष्यामि, पुनस्तां क-
णशः कृत्वा दशदिग्वधूनां बलिं दास्ये । ज्येष्ठो भीममभा-
षिष्ट–भो बान्धव ! त्वयि सर्वं भवत्येव, परं रक्षोजातिस्त्वति-
क्षुद्रा नानाकपटकारिणी, अदृश्यवैरिणी बलवद्भिरपि जेतुं न
शक्यते, सा कृत्या धर्मेणैव जीयते, नान्येन केनचित् । पुनर्युधि-
ष्ठिरो बभाषे–भो बान्धवाः ! सर्वैरपि धर्मे यत्नो विधेयः, इति
धर्मसुतस्याऽऽज्ञां हृदयेऽवधार्य चतुर्विधाहारं प्रत्याख्याय सर्वेऽपि
सप्तवासरी यावत् पञ्चपरमेष्ठिस्मरणपरायणा उटजप्राङ्गणे तस्थुः।
ते कदाचिद् गोदोहिकासने तस्थुः, कदाचिदुत्कटिकासने,
कदाचिद् वीरासने, ब्रह्मचारिणो जितेन्द्रियाः । एवं पञ्चापि
पाण्डवाः क्रमेण षड्वासराणि गमयामासुः। किरीटी एकपादेन
प्रतिमासितो मन्त्रराजैकमानसो ध्यानेनैव षड्दिवसीं निन्ये ।
कुन्तीकृष्णे अपि षड् दिनानि अर्हद्ध्यानपरायणे तस्थतुः ।
कृत्योपसर्गसोत्कण्ठाः पञ्चापि पाण्डवाः शस्त्राणि संनिधौ वि-

धाय सप्तमेऽह्नि पञ्चपरमेष्ठिस्मरणतत्परा धर्मध्यानं विविशुः। अथ धर्मध्यानस्थितैः पाण्डुपुत्रैः करभीकण्ठरोमधूम्रः पांशुपूरो व्यलोक्यत। तेन पांशुपूरेण व्याप्तं समग्रं नभस्तलम्, ततो मेघौघवद् हस्तिसैन्यं समागतम्, तत उत्तालफलव्याप्तं नभस्तलं तैरश्वीयसैन्यमदृश्यत। अथ वंशयष्टिव्यापृतकराः क्रूराः केचन नराः द्वास्थवर्गीणाः पाण्डवसमीपमागत्य एवं बभाषिरे– अरे वनेचराः! यूयं पञ्चाप्येकीभूय उर्द्धस्थाः किं चिन्तयथ ?, एतत् स्थानं विमुञ्चत, शीघ्रमितो यातः अत्र धर्मावतंसस्य राज्ञो निवासो भविष्यति। तेषां सैनिकानां वचोभिः क्रुद्धो भीम उपशमं विमुच्य साटोपकोपकम्प्रः सव्येतरपाणिना गदां समादाय अभाषिष्ट–

यथा–

"अभाषिष्ट च रे दुष्टाः! कः कालेन कटाक्षितः ?।
बलान्मौलिमणिं हन्त! को जिघृक्षति तक्षकात् ?॥१॥
कः केशरिकिशोरस्य कर्षति स्कन्धकेसरान् ?।
तिष्ठतोऽत्र सुखेनास्मान् को नु निर्वासयिष्यति?" ॥२॥

इत्युक्त्वा भीमेन ते दण्डधरा अग्रसैनिकाः क्रोधाद्गले धृत्वा निर्भर्त्स्य कन्दुकवत् क्रोशमात्रभुवं दूरे क्षिप्ताः। ततस्तैरुल्लुण्ठवेत्रिभिर्वण्ठैः शीघ्रं गत्वा संवर्मितां चमूं समानीय निमेषार्द्धात् सर्वे पाण्डवा अरुध्यन्त। ते पाण्डवाः तत्सैन्यं दृष्ट्वा ध्यानं त्यक्त्वा सावधानमनसः स्वमायुधं जगृहुः। ततस्ते पञ्चापि पाण्डवा आयुधानि गृहीत्वा प्रसृताः सिंहा इव मृगश्रेणीं तां चमूमनाशयन्। सेनाऽनुगाः पाण्डवाः सेनां हक्कयन्तो यावद् दूरे गताः, तावदेकः सुन्दराकृतिः कश्चित् पुमान् नृपलक्ष्म्या संयुतः कुन्तीकृष्णाश्रितमुटजमाविशत्। अथ कुन्तीकृष्णे षड्दिनोपोषिते धर्मैकतत्परे परपुरुषं समालोक्य क्षोभमीयतुः। पाण्डवेषु दूरं गतेषु कुन्तीद्रौपद्यौ उभे भयकातरे

नेत्रे निमील्य केवलं हृदि जिनं सस्मरतुः । सोऽपि पुमान् द्रुपदात्मजां बलाद्बाहौ धृत्वा हयमारोहयन् स्वयं द्वितीयं तुरङ्गमं समारुह्य बाढस्वरेण पूत्कुर्वती पाण्डवपत्नी जहार । अथ पाण्डवाः सैन्यातिरस्कारात् लब्धजया मार्गे प्रत्यावृत्ता द्रौपद्याऽऽक्रन्दं शुश्रुवुः । ततः क्रुद्धाः पञ्चापि पाण्डवाः कान्ताऽपहारिणं पुरुषं समभ्येयुः । सोऽपि सैन्यमध्ये समागात् । पुनस्तत्सैन्येन समं पाण्डवा युयुधिरे । अहो ! पाण्डवपौरुषम्—

यथा—

"एकतस्तन्नृपाऽनीकमन्यतः पञ्च पाण्डवाः ।
तथापि बलिनां तेषां न क्षोभस्य लवोऽप्यभूत्" ॥१॥

तमनुधावन् पार्थो बभाषे—रे दुरात्मन् ! मम पत्नीं हृत्वा क्व यासि ?, इत्युक्त्वा तमनु शराः प्रहिताः । तामर्णवतुल्यां सेनां मन्दर इव गाहमानोऽर्जुनः शुशुभे । तदा स नृपतिर्निजां सेनामर्जुनेन हन्यमानां दृष्ट्वा क्रोधारुणलोचनः कृष्णां केशे धृत्वा कशाघातैरताडयत् । तस्मिन्नवसरे तिरस्कारतापेन, अंशुमालिना शिरस्थेन च, षष्ठोपवासतपसा च, संग्रामाच्च, तेषां पाण्डवानां तालुशोषिणी तृषा प्रादुर्बभूव । प्रकर्षेणात्यन्तपीडितो धर्मात्मजो बान्धवान् बभाषे—भो बान्धवाः ! मां तृष्णाऽत्यर्थं बाधते, तया पीडितोऽहं पदमपि गन्तुं न शक्नोमि । भो बान्धवाः ! इतो नातिदूरे इन्द्रनीलच्छविपत्रैर्विभूषितो न्यग्रोधवृक्षो दृश्यते । तस्य परितश्चतुर्दिक्षु हारीतकपिञ्जलहंसबकादयः पक्षिसमूहाः परिभ्रमन्ति, तर्हि नूनमत्र जलेन भाव्यम्, यूयं तत्र गत्वा पानीयमानयत । एषोऽपि द्रौपदीचौरोऽस्मान् विलोक्य यावद् विलम्बमानोऽस्ति, तावत्पानीयं पाय्यते, पूर्वं पानीयं पीत्वा तत एनं द्रौपदीतस्करं कीनाशदासतां नेष्यामि । इत्युक्त्वा तपःसूनुर्जलानयनाय नकुलं सहदेवं च प्रेषयामास । तावथ तत्र जलाश्रये

गत्वा यथेष्टं पयः पपतुः । ततो युधिष्ठिरादिभ्रातृकृते पद्मिनीपुटे जलं भृत्वा यावत्पञ्चषान् क्रमांश्चेलतुस्तावत्तौ अतुच्छमूर्च्छाव्याप्तौ भुवि निपेततुः । अहो ! विधिविलसितम्–जीवाः कर्मभिरेवं विडम्ब्यन्ते । अम्बुनो विलम्बं दृष्ट्वा युधिष्ठिरः पार्थमुवाच–भो वत्स ! जलाय गतौ नकुलसहदेवौ पुनर्नायातौ, तत् किं कारणम् ?, वेगेन त्वं याहि, तत्र गत्वा तयोर्वृत्तान्तं समानय, तूर्णं पानीयमानीय मम तृषां मुषाण । अथ त्वरितं तत्र गतो धनञ्जयः स्वांसाविव कनीयांसौ बान्धवौ पेतिवांसौ ददर्श । तौ तथाविधौ दृष्ट्वा धनञ्जयो बाढं पूत्करोति स्म–हा वत्सौ ! युवां केनेमां दशां गमितौ?; हे वत्सौ ! युवां द्रुतमुत्तिष्ठतम्, आर्योऽत्यर्थं खिद्यते । एवं वारं वारं प्रोच्यमानोऽर्जुनस्तटाके गत्वा स्वयं जलं पीत्वा ततः पद्मिनीपत्रे भ्रातृकृते जलं गृहीत्वा यावद्याति स्म तावदर्जुनोऽपि तथैव पतितः । अथ धर्मजो भीममभ्यधात्–भो बान्धव ! बन्धुप्रेक्षणकृते प्रहितोऽर्जुनश्चिरगतोऽपि कथं नागतः ? बन्धोः प्रवृत्तिं समानय, मदर्थं च जलं समानय, इति ज्येष्ठगिरा भीमसेनस्तस्मिन् सरस्तीरे उपेयिवान्, तत्र स्वान् बान्धवान् मृत्योर्दशां प्राप्तान् दृष्ट्वा भृशं विललाप–हा वत्साः ! भवतां केयं दुःस्थाऽवस्था समुपस्थिता ?, भो वत्साः ! केनाप्यस्मद्विरोधिना कृष्णा गृह्यते, भवतां माता एकाकिनी दुःखं तिष्ठति, यूयं किं सुखसुप्ता इव सुखं तिष्ठत ?। भो बान्धवाः ! आर्यस्य युधिष्ठिरस्य पिपासाप्रतिक्रियां कृत्वा ततोऽहं भवतः प्रतिक्रियां करिष्ये । इत्युक्त्वा जलं पीत्वा पद्मिनीपत्रे जलं लात्वा भीमोऽपि तथैव पञ्चषान् पादान् गत्वा पतितः । महतीं वेलां भीमस्यापि ज्ञात्वा तपःसुतो दध्यौ–अहं गत्वा चतुरोऽपि मद्बन्धून् अन्वेषयामि, इति चेतसि चिन्तयित्वा युधिष्ठिरो जलाश्रये गतः । तत्र तान् निजान् बन्धून् पतितान् दृष्ट्वा युधिष्ठिरो बभाषे–

“ हा वत्स ! भीम ! मां त्यक्त्वा किं शेषे निद्रयाऽनया ?।

साम्प्रतं साम्प्रतं किं ते सदुःखं मामुपेक्षितुम् ? ॥ १ ॥
दुर्योधनस्य गदया नोरुभङ्गस्त्वया कृतः ।
न च दौःशासनं वक्षः क्षुण्णं तन्मां किमत्यजः ? ॥ २ ॥
हिडम्बबककिर्मीराः कृतान्तातिथयस्त्वया ।
महाबाहो ! कृता येन तत् शौण्डीर्यं क्व ते गतम् ? ॥३॥
हा वत्स ! पार्थ ! पार्थक्यं प्राणैरपि न ते मम ।
इयं कथमवस्था ते जीवत्यपि युधिष्ठिरे ? ॥ ४ ॥
नाद्याऽपि विहितं कृष्णापराभवनिषूदनम् ।
त्वमेवं किमु निद्रासि विस्मृताऽरातिविक्रमः ?" ॥ ५ ॥

इत्यादीनि दीनवचनानि कथयन् वारं वारं मूर्छामवाप । पुनः सरःशीतवातैर्लब्धचैतन्य इति विलपति स्म—हे बन्धो वृकोदर ! केनापि पापिना ह्रियमाणा द्रौपदी त्वयैव मोच्या, तत् किं त्वं निर्भरं स्वपिषि?। हे भीमार्जुनौ! पूर्णदेशीया द्वादशवत्सरी अभवत्, युवामम्बुधिमुत्तीर्य गोष्पदे कथं ब्रुडितौ ?। हे बन्धो धनञ्जय ! यूयं किं कर्णस्योपयाचितैरीदृशीं दशां प्राप्ताः ?, हे वत्सौ नकुलसहदेवौ ! अहमक्षतो गृहे गतो मातुर्माद्र्याः पुरः किं वक्ष्यामि ?। एवं विलपन्तं युधिष्ठिरं समालोक्य कश्चित् पुलिन्द उवाच—भोः कापुरुष ! केनापि पुरुषेण तव प्रेयसी विलुप्यते, तस्या उत्तरीयमपाकृत्य भृशं कशाघातैस्ताड्यते, साऽपि भवतोऽभिधानं गृहीत्वा आर्यपुत्र ! आर्यपुत्रेत्युक्त्वा सकरुणं रोदिति । एते तव बान्धवाः शीतसरसः समीरेण पुनर्लब्धचैतन्या भविष्यन्ति, त्वं तु तत्र गत्वा तावत् स्वां प्रियां त्रायस्व, यतो महापुंसां दाराणामपि अरक्षणे कलङ्कोऽस्ति । तस्य अनेन वचसा क्रुधा ज्वलन् धर्मसूनुः पयः पीत्वा वेगाद् धावन् बन्धुसमीपे युधिष्ठिरोऽप्यपतत् । तदा तेषां पञ्चानामपि पाण्डवानां तथा मूर्छा समागता, यथैतेषां व्योमचरैः पञ्चत्वमेव निश्चिक्ये । तस्मिन् मूर्छाक्ष-

णे तेषां पाण्डवानां दुःखैः पशवोऽपि ग्रासादिकं मुमुचुः । अथ क्षणान्तरे ते पाण्डवाः समस्तभूतानां प्रमोदैः समं नयनान्युदमीलयन् । ततो नलिनीपत्रेऽम्बु कृत्वा रत्नमालया पवित्रीकृताऽम्बुनाऽभिषिञ्चन्तीं तथा स्ववासःपल्लवाग्रेण स्वान् पतीनभिवीजयन्तीं सर्वेऽपि पाण्डवाः पुरतो निजपत्नीं द्रौपदीं ददृशुः; तथा चाऽश्रुपूर्णाक्षीं मातरमपि ददृशुः । ततस्ते पञ्चापि पाण्डवाः समातृपत्नीकाः तत्सरस्तीरे एकस्य वृक्षस्याध उपविष्टाः परस्परं वार्तां कुर्वन्ति स्म । युधिष्ठिरः प्रियां प्रत्याह—हे प्रिये ! तेन तव हर्त्रा पापिष्ठेन किं कृतम् ?, कुत्र गतः ?, तदाख्याहि । साऽपि सर्वेषां पुरत एवमवोचत्—हे प्राणेश ! त्वयि पयः पातुं याते स पापिष्ठो मां मुक्त्वा न ज्ञायते कुत्र गतः ?, सा सेनाऽपि कुत्र गता ?। सापि न दृष्टा, किन्त्वेकाऽहं तस्मिन् कानने इतस्ततः पर्यटन्ती व्यालानां भयङ्करारावान् शृण्वती भयातुराऽभवं, तावत् कश्चित् शबरः शीघ्रं समागत्य मामवादीत्—हे भद्रे ! मया सार्द्धं समागच्छ, यथाऽहं तव प्राणेशान् पञ्चापि पाण्डवान् दर्शयामि; किं त्वं शून्ये कानने एकाकिनी परिभ्रमसि ?; इत्युक्त्वा तेन भिल्लेन मामत्र समानीय मुक्ता; तेन पुण्यवता माता कुन्त्यपि अत्रानीता; सोऽन्यत्र गतः । अहं श्वश्रूसहिता भवतो मृतप्रायान् अपश्यम् । ततोऽतिदुःखिता यावदहं किञ्चिद् देवं स्मरामि, तावत्सहसाऽहं स्फुटितब्रह्माण्डमिव किलकिलारावमश्रौषम् । तत् श्रुत्वा मया चिन्तितम्—नूनमेषा राक्षसी समायाति; एवं यावदहं चिन्तयामि, तावदेकां राक्षसीं प्रादुर्भूतामपश्यम् । कथंभूताम्?-श्यामलाकृतिं व्यात्तमुखां दंष्ट्राङ्कुरभयङ्करां पिङ्गचिकुरां पिङ्गाक्षीं गवलमषीमेघवर्णां कृत्तिकाकरां फेत्कारपरिमण्डिताम्, अस्थ्याभरणभूषिताम्, अन्तरिक्षात्समवतीर्णां त्वरितमायान्तीं दृष्ट्वा मया चिन्तितम्—एषा कृत्या राक्षसी, इति निश्चितम् । अथैषा पापपरायणा किं करिष्यति ?, एवं यावदचिन्तयं, तावत्स एव पुलिन्दः पितेव स्ने-

हार्द्रमानसो नौ अन्तराले॰ सज्जीभूय तस्थौ । साऽप्यागता राक्षसीपरिवृता युष्मान् मृतान् वीक्ष्य वैलक्ष्यं गता । ततः कृत्या राक्षसेश्वरी अन्यां राक्षसीं प्राह—ब्राह्मणेन दुरात्मना प्रहिताऽहं मृतान् पाण्डवान् पुनः कथं हन्मि ?, इति कृत्यावाचं श्रुत्वा पुलिन्दो न्यगदत्—

यथा—

" त्वादृशां मृतकस्पर्शः पिङ्गले ! नन्वमङ्गलम् ।
सरस्यमी विषं पीत्वा मृता एव न संशयः" ॥ १ ॥

हे चण्डि ! हे कृत्ये ! यदि अल्पमपि एतेषां जीवितं भवेत्, तर्हि एते निश्चितं शत्रुक्षयकारकाः प्रभवेयुः, परं मृतकानां भक्षकाः शृगालीसारमेयादयो भवन्ति, अतो भवद्विप्रतारकं विप्रं विलुम्पय सुरोचनं, यथा न पुनरेवं विप्रतारयति । इति शबरोदितं श्रुत्वा कृत्या राक्षसी क्रूरकर्मा गगनेनैव ययौ । युष्माकमन्तिके आर्या कुन्ती समागता, युष्मान् मृतान् दृष्ट्वा यावता भृशं रोदिति स्म, अहमपि रोदनं करोमि स्म, तावन्नागराजार्पितं कर्णस्थं पङ्कजं वीक्ष्य नागराजस्य गिरं संस्मृत्य अहमार्यां कुन्तीमवादिषम्—हे मातः ! मम कर्णोत्पलं यतो विकस्वरं दृश्यते ततो निश्चितं पञ्चापि मम पतयो जीवन्त्येव, केनचित् हेतुना मूर्छामुपगताः, अतो हे मातः ! तव पुत्राणां कश्चित्प्रतीकारं विचिन्तय । एवं वदन्तीं मां कुतोऽपि समागत्य पुनः कृपालुः शबरोऽब्रवीत् ।

यथा—

" कृतं ते चिन्तया भद्रे ! नृपकण्ठविलम्बिनीम् ।
रत्नमालां निधायान्तः कान्तान् सिञ्च सरोऽम्भसा ॥१॥
कृत्वा चेतसि तद्वाचं निषिञ्चामि जलेन वः ।
युष्मच्चैतन्यलाभाच्च फलितं मे मनोरथैः " ॥ २ ॥

